# PREFACE.

This is the second edition of the Vāstuvidyā originally published as No. 30 in this Series. It is furnished with the Sanskrit Commentary, Laghuvivṛti, of M. R. Ry. K. Mahādeva Śāstrī Avl., Retired Ag. Curator of this Department. The commentary is calculated to afford better insight into the text and is largely based on a Malayalam Commentary secured on loan from Mr. Vāsudevan Mūs of Āranmuḷa, in 1106 M. E. The title Vāstuvidyā seems to be most appropriate to the work, imparting, as it does, all-round knowledge on the art of architecture.

There are 16 chapters, Sādhanakathana to the end of Mṛllosṭavidhāna. No clue is given at the close of the last chapter in indication of the termination of the work. The colophon 'इति वास्तुविद्या समाप्ता' at the end of Chapter 16 is evidently an interpolation by the scribe as borne out by the conspicuous absence of such topics as दारस्वीकरणं etc., despite the author's own undertaking, "दारस्वीकरणं वक्ष्ये निधिगेहस्य लक्षणे" (Chapter 13).

The following benedictory stanza,

"भूयाद् ध्रुवा द्यौः पृथिवी च भूयाद्<br>
भवन्त्विमे भूमिधरा ध्रुवाश्च ।<br>
ध्रुवं जगद्विश्वमिदं ध्रुवं स्याद्<br>
राजा तथा धाम च तद्ध्रुवं स्यात् ॥"

(Chapter 15)

occurring at the end of chapter 15 leads one to presume that the work comprises two parts, the first extending to the end of Bhavanaparigraha and the second dealing with Mṛllosṭavidhāna etc. The colophon 'वास्तुविद्या समाप्ता' occurring at the end of chapter 15 in the manuscripts marked ख might presumably have been furnished by the author with a view to indicate the close of the Pūrvabhāga.

There is no reference in this work to ascertain the the author's identity. From his acceptance of the measurements prevalent in Kerala in relation to building construction it is not out of place to presume that he was a Keralīya. If the phrase 'धाम च तद् ध्रुव स्यात् occurring in the verse cited above is a chronogram this work may be assigned to the 10th century A. D. The details deserve minute scrutiny and critical examination at the hands of eminent scholars and I place this edition before them.

Trivandrum,<br>
14-1-1116.

Vaidyaśāstranipuṇah,<br>
L. A. RAVI VARMA,<br>
*Honorary Director.*

॥ श्रीः ॥

# निवेदना ।

---

अनन्तशयनसंस्कृतग्रन्थावल्यां ३०-तमाङ्कतया प्रसिद्धीकृताया वास्तुविद्याया इदं द्वितीयं संस्करणम् । अत्र च, ११०६ तमवर्षे आरम्मुळ वासुदेवमूस्महाशयादधिगतां वास्तुविद्यायाः केरलभाषान्याख्यामाश्रित्यात्रैव ग्रन्थालये तात्कालिकाध्यक्षचरैः श्रीमहादेवशास्त्रिभिः प्रणीतं लघुविवृत्याख्यव्याख्यानं व्युत्पित्सूपयोगाय संयोजितम् । वास्तुसम्बन्धिज्ञानमस्माज्जायत इत्यस्य वास्तुविद्येति संज्ञाकरणं समुचितं प्रतिभाति ।

इयं च साधनकथनादिशूलोष्टविधानान्तैः षोडशभिरध्यायैः सङ्कुम्फिता । षोडशाध्यायावसाने ग्रन्थपरिसमाप्तिप्रकटनपरं न किञ्चिदुपलभ्यते । 'इति वास्तुविद्या समाप्ता' इति परिदृश्यमानं तु

"दारुस्वीकरणं वक्ष्ये निधिगेहस्य लक्षणे ।"

(अ० १३)

इति ग्रन्थकर्त्रा स्वयं प्रतिज्ञातस्य दारुस्वीकरणादेरत्रानुपलम्भाल्लेखकेन लिखितं सम्भाव्यते ।

"भूयाद् ध्रुवा द्यौः पृथिवी च भूयाद्
भवन्त्विमे भूमिधरा ध्रुवाश्च ।
ध्रुवं जगद् विश्वमिदं ध्रुवं स्याद्
राजा तथा धाम च तद्ध्रुवं स्यात् ॥"

(अध्या० १५).

इति पञ्चदशाध्यायान्ते परिदृश्यमानान्मङ्गलपद्याद् भागद्वयात्मिकेयं कृतिरिति, तत्र भवनपरिग्रहान्तो भागः पूर्व इति शूलोष्टविधानादिरुत्तरभागश्चेति शक्यमुन्नेतुम् । पञ्चदशाध्यायावसाने वास्तुविद्या समाप्तेति छ मातृकायां दृश्यमानं पूर्वभागमुद्दिश्य ग्रन्थकर्त्रा लिखितं स्यादिति च सम्भाव्यते ।

अस्याः प्रणेतुर्नामनिर्णायकं प्रमाणं न किमपि परिदृश्यते । केरलवास्तुसम्प्रदायमनुसृत्य भवनमानादीनां क्रोडीकारान्नूनं केरलदेशोत्पन्नोऽयं कर्तेति सम्भावनापि नास्थाने । भूयाद् ध्रुवेत्यादिपद्यस्थेन 'धाम च तद् ध्रुवं स्यात्' इत्यनेन यदि कलिदिनसङ्ख्या ग्रन्थकर्त्रा विवक्षिता तर्हि सहस्रं वत्सरेभ्यः प्रागस्य जीवितसमयः स्यात् । सर्वमिदं विचक्षणैर्विमर्शनीयमितीमां सहृदयसमक्षमवतारयामि ।

अनन्तशयनम्,<br>
१४-१ ११६.

वैद्यशास्त्रनिपुणः,<br>
एल्. ए. रविवर्मा.

## PREFACE TO THE FIRST EDITION.

Vastuvidyā treats of the materials, the ground and other things necessary for house-building, in sixteen chapters At the end of the 15th chapter which describes the occupation of a newly-built house, the manuscript marked ङ contains the colophon, वास्तुविद्या समाप्ता, but it then goes on to the end of the 16th chapter which deals with earth and tile-making, as also the other manuscripts used for this edition. It is therefore proper that the 16th chapter should also be a part of the work Many archaic usages (आर्षप्रयोग) are found in this work as in the Śaivāgama (शैवागम) and Vaikhānasāgama (वैखानसागम)

This edition of the work is based on the following seven palm leaf manuscripts written in Malayalam characters and about two centuries old

1 क Belonging to the Palace Library, Trivandrum, and running up to a portion of the eleventh chapter.

2 ख Belonging to the Palace Library, Trivandrum, and running up to the end of the twelfth chapter

3 ग Belonging to the Palace Library, Trivandrum.

4 घ Lent by Mr. Śaṅkara Varyar, Mānnār

5 ङ Lent by Mr Śaṅkaranārāyaṇa Pillai, Nālekāṭṭu, Mannār

6 च Belonging to Mr Rājarāja Varma Rājā of Eṇṇakkāṭu, and running up to the beginning of the eighth chapter.

7 छ Lent by Mr Rāmāśāri, Parur

Trivandrum. T. GANAPATI ŚĀSTRĪ

# प्रथमसंस्करणनिवेदना ।

अस्यां वास्तुविद्यायां गृहनिर्माणं प्रति साधनं, भूमिः, वास्तुस्वरूपम् इत्यादिकं षोडशभिरध्यायैः प्रतिपादितम् । भवनपरिग्रहाध्यायस्य पञ्चदशस्यान्ते प्राक् षोडशाध्यायारम्भाद् 'वास्तुविद्या समाप्ता' इति लिखितं छसंज्ञ आदर्शे । तथापि मूलोष्टलक्षणपरस्य षोडशाध्यायस्य तत्रापरित्यागाद् आदर्शान्तरेषूपलम्भाच्च ग्रन्थाङ्गत्वमेव युक्तम् । अस्या शैवागमवद् वैखानसागमवच्चार्षाः प्रयोगा विद्यन्ते ।

अस्याः संशोधनाधारभूता ग्रन्था एते —

| | | |
|---|---|---|
| १. | राजकीयग्रन्थशालीयः ११ अध्यायैकदेशान्तः | क. संज्ञः. |
| २. | राजकीयग्रन्थशालीयः १२ अध्यायान्तः | ख. संज्ञः. |
| ३. | राजकीयग्रन्थशालीयः | ग. संज्ञः. |
| ४. | (मान्नार्) शङ्करार्यसम्बन्धी | घ. संज्ञः. |
| ५. | (नालेकाट्टु) शङ्करनारायणपिळ्ळसम्बन्धी | ङ. संज्ञः. |
| ६. | (पुण्णकाट्टु) राजसम्बन्धी ८ अध्यायारम्भान्तः | च. संज्ञः. |
| ७. | (परवूर्) रामाशारिसकाशाल्लब्धः | छ. संज्ञः. |

सर्वे इमे केरळीयलिपय उपद्विशतवर्षवृद्धास्तालपत्रात्मकाः ।

अनन्तशयनम्. त. गणपतिशास्त्री.

---

॥ श्रीः ॥

# उपोद्घातः ।

केरळेषु सुचिरादिव लुप्तप्रायाणां शिल्पग्रन्थानाम् अन्येषां च तादृशानां प्राचीनग्रन्थानां पुनर्मुद्रापणेन पण्डितलोकमनुगृह्णद्भ्यो महोन्नतमहामहिमशालिभ्यः श्रीचित्रावनारबालरामवर्ममहाराजेभ्यस्तदनुगुणगुणविभवेभ्यः श्रीसचिवोत्तम-सर्-सि-पि-रामस्वाम्यार्यवर्येभ्यश्च धारयामि बहुकृत्वः पुरुषायुषप्रार्थनाम् आशिषा विजयोन्नत्यभिवर्धनं च ।

उपोद्घातोऽयं वास्तुविद्यां प्रकृत्य प्रवृत्त इति वास्त्वागममधिकृत्य किञ्चिन्निरूप्यते ।

आब्रह्मपिपीलिकान्तं हि प्राणिनो यावदपेक्षं शीतवातानलादिभ्यः स्वशरीरसंरक्षणाय आसृष्टेर्यथाप्रकृति यत्किमपि वास्तु निर्माय स्वेष्टं साधयन्तीति पश्यामः । यथा पक्षिमृगकीटमधुकरसरीसृपादिषु दृश्यताम् । ते हि विचित्रतरं नीडादिकं निर्मिमते । तेषां किमस्ति शास्त्रम् उपदेष्टा वा । नैव । तथा मानुषा अपि पुरा देवैः सह कल्पवृक्षेषु निवसन्तः कालान्तरे स्वेषामेवापचारादपगतेषु तेषु खिन्नमानसास्तदाकाराननुस्मृत्यानुस्मृत्य स्ववासाय गृहाणि चक्रिरे । तथा च समराङ्गणसूत्रधारनाम्नि शिल्पग्रन्थे सहदेवाधिकारे दृश्यते—

वास्त्वागमः ।

> "इत्थं दुःखत्रयार्तास्ते व्यवायाधर्मगुप्तये ।
> हिमनीहारशीताम्बुवाताद्युच्छित्तयेऽपि च ॥
>
> अजातप्रीतयो वृक्षैः कुट्टिमानि गृहाणि च ।
> व्यधुरिच्छत्वाश्मभिर्वृक्षानन्यान् दुःखार्तचेतसः
>
> स्मृत्वा कल्पद्रुमाकारांस्तद्रूपाणि गृहाणि ते ।
> एकद्वित्रिचतुस्सप्तदशशालानि चक्रिरे ॥

शष्पप्राकारपरिक्षेपाच्छन्नेषु तृणादिभिः ।
वृष्टास्तेष्वनयन् कालमार्तेषु गृहमेधिनः ॥"

इति । तदनुगामिनश्च स्वकूटस्थादृतां रीतिमनुसृत्य, यथारुचि तत्र यंकमपि भेदमुपकल्प्य वा वेश्मानि निर्ममिरे । इदानीन्तना अपि गृहनिर्मितिषु तानेवानुवर्तन्ते । एवं सृष्टावन्तर्भूताः सर्वेऽपि प्राणिनः शास्त्रमुखप्रतीक्षां विनैव यथेच्छं वास्तु कल्पयन्तीति तत्र न कस्यापि शासनं प्रयतनं वा-वश्यकम् । किन्तु चतुर्वर्गमभीप्सूनां वर्णाश्रमधर्मिणां च गृहिणां यत्रक्वापि स्वेच्छाकल्पितेन वास्तुना मूककाणखञ्जबधिरादिभिरिव उद्दिष्टमर्थं यथाव-न्निर्वोढुं न शक्यत इति पश्यन्तो महर्षयस्तदनुयायिनोऽन्ये च तत्तद्वास्तुशुभाशुभ-लक्षणादिकमनुरुन्धानास्तन्निबद्धानि बहूनि तन्त्राणि तेनिरे । ते च—

"भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा ।
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ॥
ब्रह्मा कुमारो नन्दीशः शौनको भर्ग एव च ।
वासुदेवोऽनिरुद्धश्च तथा शु(क? क्रा)बृहस्पती ॥
अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः ।"

इति मत्स्यपुराणे स्मृताः । अत्र शिल्पशास्त्रशब्देन वास्तुशास्त्रमपि संगृह्यते, यतो बहुभिः शाखाभिर्विस्तृते शिल्पशास्त्रे वास्तुशास्त्रमप्यन्तर्भवति । अष्टादशेति परिगणनमुपलक्षणम् । अन्येषामपि पराशर-गर्ग-बृहद्रथ-मार्कण्डेयादीनाम् अन्यत्र स्मरणात् । वेदे च कश्यप-ऋभु-नासत्य-अगस्त्य-त्वष्ट्रादयः पूर्वशिल्पिनः श्रूयन्ते । एतेन वेदकालादेवारभ्य शिल्पशास्त्रमिदं प्रवृत्तमित्यवगम्यते । युक्तं च तदित्यत्रोपपत्तिः पूर्वं निरूपिता । यदि ऋग्वेदादीनाम् उत्पत्तावाधुनिकै-र्निर्णीतः कश्चिन् कालोऽभ्युपगम्यते, तर्हि ततः पूर्वमेव शिल्पशास्त्रसत्ताङ्गी-क्रियताम् । एवमेतैर्महात्मभिस्तच्छिष्यप्रशिष्यैश्च देश-काल-अवस्था-अभि-सन्ध्यनुगुणं शास्त्रमिदं बहुप्रपञ्चं वितायते स्म ।

एषां मतानां परमफलेषु भेदाभावात् तत्तद्देशेषु वास्तुविधौ यथारुचि सर्वाण्यपि मतान्याद्रियन्ते । कश्यप-भृगु-मयमतान्यवष्टभ्य निर्मिता देवालया मनुष्यालयाश्च नासिकक्षेत्रादिषु इदानीमपि दृश्यन्त इत्यनुश्रूयते । एवं

हिमवद्विन्ध्ययोर्मध्ये दक्षिणापथे च विद्यमानान् प्राचीनालयान् सूक्ष्मेक्षिकया परीक्षमाणानां मन्ये मतान्तराणामपि लक्ष्याणि सुलभानि स्युः ।

इह केरळेषु पुनः काश्यप-मय-पराशर-भास्कर-विश्वकर्म-मार्कण्डेयादीनां मतानि प्रचारपदवीमुपगतानि दृश्यन्ते । प्राक् वर्षद्वयात् प्राक् इह गणितादिशास्त्रान्तरेष्विव शिल्पशास्त्रेष्वपि अत्यद्भुतकरनूतनशिल्पसृष्टिनिपुणा बहवो महापण्डिता विविधवर्णेष्वासन्, येषां शिल्पविद्याकुशलताः अद्यापि क्वचित् क्वचिद् देवालयेषु राजमन्दिरेषु च शिलादार्वादिषूत्कीर्णा इव विराजन्ते । अस्मन्महाराजसम्बन्धि विचित्रतरशिल्पकल्पनारमणीयं नूतनप्रासादाख्यम् अनन्तविलासाख्यं च राजमन्दिरं प्राचीनशिल्पकलाविदग्धेन केनचित् केरळीयेन विप्रेण निर्मितमिति वृद्धा वदन्ति । एवमिहैव राष्ट्रे श्रीवर्धनपुरादिष्वन्यान्यपि सल्लक्ष्याण्युदाहर्तुं शक्यन्ते । ग्रन्थविस्तरभयाद् न प्रदर्श्यन्ते । एतैर्महानुभावैस्तच्छिष्यैर्वा रचितास्तादृशाः शिल्पग्रन्था अद्य नोपलभ्यन्ते, यादृशैस्तेषां केरळानां च यशोराशिराहिमाचलं व्याप्नुयात्। एषामनुपलम्भे च कारणं, मन्ये, तद्वंश्यानां प्राचीनग्रन्थसंरक्षणभक्तिजाड्यमेवेति । अहो बत !! अनेन हेतुना कियन्त्यनुभवसिद्धानि केरळमात्रसुलभानि शिल्परहस्यानि वल्मीकभक्षितैर्ग्रन्थैः सह नाशितानीति को वेद । इतोऽपि कष्टतरमन्यत् , यद् अस्मन्महाराजकृपया ग्रन्थानां सुकरप्रकाशनेऽस्मिन्नपि काले केचन नष्टावशिष्टानां पुनर्विनाशनं सश्रद्धं प्रतीक्षमाणा इव तान् यत्रकुत्र गृहगह्वरेषु निक्षिप्योदासते । हन्त !! प्रसङ्गादनुस्मृतेन सद्ग्रन्थलोपजनितेन दुःखेन वयं सुदूरमाकृष्टा इव । भवतु । प्रकृतमनुसरामः ।

पूर्वं प्रदर्शितानां महर्षीणां मतान्यनुसृत्य शास्त्रनिर्दिष्टलक्षणैः किमपि सौकर्यं चाश्रित्य क्रियमाणं वास्तु दैवं मानुषमिति द्वेधा दृश्यते । दैवं देवतामात्रसम्बद्धं, मानुषं मनुष्योपयोगि च भवति ।

ग्रन्थस्वभावः । प्रकृतवास्तुविद्यायां तु द्वितीयो भेद आदृतः ।

अस्यां षोडशाध्यायाः उपलभ्यन्ते । तत उपर्यपि कतिपयैरध्यायैर्भवितव्यमित्यत्र न्यायः ग्रन्थसमाप्तौ निरूपितोऽस्माभिः । केरळीयेन केनचिद् व्याख्याता षोडशाध्यायपरिमितग्रन्थस्य भाषाव्याख्या निर्मितेति तत्संवलिता

एवाध्यायाः अद्य प्रसिद्धपदवीमुपारूढा इति मन्ये । एभिरध्यायैर्यथाक्रमं साधनकथन वस्तुधालक्षण-वेदीमान-दिक्परिच्छेदादयो मूल्लोष्टविधानान्ता मानववास्तुनिर्मितावश्यापेक्षिताः सर्वेऽपि विषयाः सूत्ररूपेण प्रतिपादिताः । तत्तदध्यायान्तर्गताः अवान्तरविषयास्तु अनुक्रमण्या वितत्य प्रकाशिता इति तत एवावगन्तव्याः ।

एते च ग्रन्थान्तरेषु प्रायस्ततः इतो विप्रकीर्णाः, यं कमप्यनुस्यूतं क्रममवलम्ब्य इदमित्थमिति शृङ्गग्राहिकया क्लेशासहिष्णुना ग्रहीतुमशक्याः विषयान्तरैर्मिश्रिताः, अपूर्णाश्च दृश्यन्ते । तामेतां न्यूनतां परिहर्तुं, केरळेषु महता सरणिमुपदेष्टु च ग्रन्थकारः

ग्रन्थप्राशस्त्यम् ।

कृपया महतीं श्रद्धामास्थित इत्यहो भाग्यमनभ्यस्तशास्त्राणां शिल्पोपजीविनाम् । किञ्च, विविधोपायेन भूपरीक्षणं, सुग्रहेण मार्गेण दिक्परिच्छेदः, सुगमया रीत्या नाडी-मर्म-महामर्म-सन्ध्यादीनां निरूपणं, यावदपेक्षं विस्तृतमङ्गणलक्षणं, सुविविक्तं भित्तशालादीनां प्रतिपादनं, करतलामलकवत् प्रत्यक्षितमधिष्ठानलक्षणम्, अतिक्रान्तगणितगहन छुपाप्रमाणकथनम्, अपास्तक्लेशं छुपाकरणं, सुविशदं कवाटद्वारविन्यसन, लघुसाध्यं मूल्लोष्टविधानम् इत्येवमादयो विषयाः अस्य ग्रन्थस्य महतीं प्रतिष्ठां शोभनीयतां च विदधते । मूल्लोष्टविधानं ग्रन्थानन्तर्भूतमिति केचिन्मन्यन्ते । अस्यान्यत्रादर्शनाद्' ग्रन्थान्तर्भूतमित्येव कल्पनायां किं नाश्छिन्नम् ? । गृहेषु विविधशिल्पकरणविषयः, कुट्टिमादीनां दृढत्वाय क्रियमाणा लेपाः, सुधायोगादयश्च ग्रन्थविस्तरभयाद् मन्दबुद्धिव्यामोहपरिजिहीर्षया वा अवश्यापेक्षितप्रतिपादनमात्रसंरम्भेण वा ग्रन्थकर्त्रा उपेक्षिता', नालस्येनाज्ञानाद् वा । अत्र क्वचित् क्वचिल्लिङ्गव्यत्ययो दृश्यते । तदेतत् "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति समाधेयम् । वास्तुनः पुरुषत्वेन कल्पनं तत्तत्स्थानानां प्रधानाप्रधानत्वख्यापनार्थम् । तच्च द्वारस्तम्भतुलादीनां गृहावयवानां निवेशने समुचितस्थानविज्ञानाय । देवतात्मकल्पनं तु तत्सम्र्हणासु बहुमतिरादरश्च भवेदित्युपदेशाय । वास्तुनः मनुष्यशरीरस्यापि यः कोऽप्यान्तरः सम्बन्धोऽस्तीति न खल्वविदित विदुषाम् । तेन तदनुकूल्यैव विधया सर्वमपि विहितमित्यवगन्तव्यम्' ।

एतादृशस्य विशिष्टग्रन्थस्य कर्ता क इति ग्रन्थशरीराद् वा, एतदुपजीव्यकवचनाद् अन्यतो वा न ज्ञायते । अथापि श्रीनीलकण्ठविरचितायां मनुष्यालयचन्द्रिकायां वास्तुविद्यायाः स्मरणात् तत्कर्ता-

ग्रन्थकर्ता ।

चार्यं ततः प्राक्तने काले केरलेषु लब्धप्रतिष्ठः, शिल्पशास्त्रगहनपञ्चाननः सर्ववास्तुतन्त्रस्वतन्त्रः, प्रामाणिकेष्वग्रिमः, शिल्पिनां परमाचार्यः कश्चिद् गणितशास्त्रपारदृश्वा द्विजोत्तमः इत्यभ्यूहितुं शक्यम् । श्रीनीलकण्ठश्च कोळम्बाब्दीयाष्टमशतकपूर्वार्धजीवीति ततः प्राचीनोऽयमवरतः क्रिस्त्वब्दीयपञ्चदशशतकपूर्वार्धजीविनस्तन्त्रसमुच्चयकारादर्वाचीनस्तत्समकालिको वा भवितुमर्हतीति बहूनामभिप्रायः। भाषाप्रौढिम्ना, सर्वतो व्यापिनार्थगाम्भीर्येण, सूत्ररूपेणानेकशास्त्रार्थकोडीकरणवैदग्ध्येन, उच्छ्वासितसद्दृशतत्प्रमेयप्रतिपादनशैल्या चायं सप्ताष्टशतवर्षेभ्यः प्रागेव स्वजीवितेन केरळानलङ्कारेति वक्तुं पार्यते । सर्वथा कल्याणाभिनिवेशिनानेन शिल्पोपजीविनां बहूपकृतमित्यत्र न कोऽपि विशयः ।

"दारुस्वीकरणं पश्चान्निधिगेहस्य लक्षणे ।
वक्ष्ये नैवात्र वक्ष्यामि ग्रन्थविस्तरतो भयात् ॥"

(पृष्ठं १६१)

इत्यस्य वाक्यस्य यदि प्रबलतरप्रमाणान्तरविरोधात् षोडशाध्यायादप्युपर्यध्यायान्तरसद्भावस्फोरकत्वं व्याहन्येत, तदा ग्रन्थकर्ता वास्तुविद्यानिर्मित्यनन्तरं "निधिगेहलक्षणा"ख्यं ग्रन्थान्तरमपि रचितवानित्यभ्युपगम्यताम् । नान्यदेतत्सम्बद्धं चरितमुपलब्धम् ।

इयं च वास्तुविद्या पूर्वमस्मद्गुरुवरैः श्रीयुत-डाक्टर्-टि-गणपतिशास्त्रिमहाशयैः प्राचीनशिल्पग्रन्थप्रकाशनसमितिकृते अनन्तशयनसंस्कृतग्रन्थावलौ प्रकाशिता आसीत् । परन्तु तदानीम् अपूर्वग्रन्थप्रसिद्धीकरणत्वरया मुद्रितायामस्यां यावदपेक्षं संस्करणं न निर्वृत्तमिति मन्वानास्ते तन्निर्वहणाय स्वसंहृत्लानं मामचोदयन् । अहं च जाल्मः

व्याख्यान-
निर्मितिः ।

विद्याभ्यासप्रकौतुकादेव दुश्शकमप्येतत् कार्यमङ्गीकार्यम् । तदनुसारेण

बहूनादर्शग्रन्थांस्तत इतः सम्पाद्य मूलपाठसंशोधनमारब्धवान् । अत्रान्तरे क्रिस्त्वब्दीयैकादशशतके निष्पन्नमित्यभ्युपगतस्य श्रीभोजदेवविरचितस्य *समराङ्गणसूत्रधारनामकस्य कस्यचन शिल्पग्रन्थस्य संशोध्य मुद्रापणाय तैर्महापण्डितैर्बरोदरराजकीयशासनमलाभि । तत्रापि तैः सदयमहमपि व्यापारितः । तत्प्रसक्त्या प्रमेयशोधनाय बहुषु शिल्पग्रन्थेषु चिरात् परिशीलितेषु एतद्वास्तुविद्यागतपाठानामपि साधुत्वासाधुत्वनिर्णयः प्रायो मे सुशकोऽभवत् । तदा द्विगुणितोत्साहस्य तत्तद्वास्तुग्रन्थचिरपरिचयानुवृत्तवासनावासितस्य मम कापि मतिरुत्पन्ना, वास्तुविद्यामेतां शुद्धपाठसंयोजनेन संस्कृत्य, नातिसंक्षेपविस्तरा सूत्ररूपमूलार्थप्रकाशनसमर्थां कामपि व्याख्यां यथामति विरचय्यानया सहैषा पुनर्मुद्रापणीयेति । दैवात् प्राचीनशिल्पग्रन्थप्रकाशनसमितिप्रेरणयास्मद्गुरुचरणानामप्यचिरादेवैतद्विषयिण्याज्ञा समुत्पन्ना । तया पुनरत्र कर्मणि तीव्रतरा प्रवृत्तिर्मे समुदपद्यत । एवं महतामनुग्रहं पुरस्कृत्याधिकरणव्यापाराविरोधेनानवरतं प्रयतमाने मयि वर्षेणैकेन लघुविवृतिरियं पूर्णाभवत् । "भागीरब्धाः सर्वयत्नाः फलन्ति" ।

अस्यां च विवृतौ सम्प्रतिपन्नप्रमाणान्तरसंवादेन मूलग्रन्थाभिप्रायाः स्फुटं वर्णिताः । पूर्वापरसङ्गत्यवगमनाय क्वाप्यवतारिका तत्तत्प्रमेयविवरणस्यादौ दत्ता । क्वचित् क्वचिदन्यत्र दृश्यमाना मतभेदाः प्रपञ्चिताः । एतद्देशीयैः साम्प्रदायिकैर्वर्ण्यमाना अर्थविशेषाः, शुद्धाः पाठभेदाश्च तत्र तत्र प्रदर्शिताः । मूलानुक्ता ज्ञेयांशाः यावदपेक्षं ग्रन्थान्तरवाक्यैरेव प्रतिपादिताः । सुखबोधार्थं वास्तुकोष्ठ–दिक्परिच्छेद–विविधाधिष्ठानादीनां चित्राणि च दत्त्वा तत्र लक्षणसमन्वयः कृतः । प्रसङ्गात् सुधायोग–वज्रलेपस्तूपीलक्षणादीनामपेक्षितांशाना विवरणमन्यग्रन्थेभ्य उद्धृत्य योजितम् । लुपाप्रमाणसाधनक्रियाणां युक्तयः क्षेत्रमितिज्ञैरेवावगन्तुं शक्या इति तत्प्रदर्शने उदासितम् । सर्वथा मूलार्थोपबृंहणाय यद्यत् सद्ग्राह्यं तत् सर्वमप्यनया विवृत्या संगृहीतमिति मे मतिः । "ततः परस्तात् सुधियः प्रमाणम्" ।

---

*श्रीभोजदेवसदसि स्थितेन "समराङ्गण"नाम्ना सूत्रधारेण रचितत्वात् तद्व्यपदेश इति केचित् । तत्र प्रमाणं मृग्यम् ।

प्राचीनशिल्पग्रन्थविवरणे पाश्चात्यशिल्पसम्प्रदायप्रदर्शनं नातीवोपयुज्यत इति तत्र न संरम्भः कृतः। इदमेकमार्गः क्षम्यतां तद्वक्तैः। यद्यस्ति तेषामत्र कौतुकं, तर्ह्यस्य ग्रन्थस्य परिशिष्टत्वेनानयोस्तारतम्यविवेचनमचिरात् करिष्यते।

प्रायः शास्त्रदृष्ट्या बहु परीक्ष्य विरचितायामप्यस्यां विवृतौ कर्मकुशलानामभिप्रायं बुभुत्सुरुत्तरकेरळेषु सुप्रसिद्धानां ब्रह्मश्री-काणिप्पय्यूर् नम्पूरिप्पाड्-महाशयानाम् अन्तेवासिनो मत्सुहृदः श्रीयुतशङ्करवार्यर् नामकस्य वास्तुकर्मनिपुणस्य सकाशमेतां मूलपाठसनाथां प्रत्यवेक्षणाय प्राहिणवम्। स च सकृपं स्वगुरुपुत्रैः सह सर्वं सुनिपुणं निरूप्य, स्वहस्तस्थितैर्द्वित्रैस्तालपत्रात्मकग्रन्थैर्मूलपाठांश्चानूद्य क्वचित् क्वचित् स्वाभिप्रायाविष्करणपुरस्सरमेतां मह्यं प्रतिप्राहिणोत्। मोदसाह्यश्च क्षणादेवास्याः स्वोद्धृतेन मूलपाठेन सह मुद्रयित्वा प्रकाशनाय। दिष्ट्या लब्धेनानेन महता साह्येन उच्छ्वसितमिव मे मनः समजनि। दृढप्रत्ययश्चाभून्महाजनसमक्षमेतामवतारयितुम्। एवं लोकहिताय केवलं व्याप्रियमाणेष्वकारणसुहृत्सु तेषु महामनस्केषु महत्सकृत्वो मम कृतज्ञतामुपहरामि। एवं तावद् विभूतिसहितैषा वास्तुविद्या समुचितां प्रकाशनार्हन्तीं सुचिरादलभत।

हन्त!! "श्रेयांसि बहुविघ्नानी"ति सुष्ठूक्तं महाजनैः। यतः प्रकाशनोन्मुख्यामस्यामेतत्प्रवर्तकाः अस्मद्गुरुपादास्ते श्रीयुतगणपतिशास्त्रिमहाशयाः दैवदुर्विपाकात् कालधर्ममगमन्। तेनानिलमुज्जृम्भितया मनःपीडया इतिकर्तव्यताशून्ये मयि व्याकुलभावमुपगते, सहायान्तरेषु च केषुचिन्मौनमवलम्बमानेषु बहुधनव्ययसाध्यमेतन्मुद्रणं समुचितकालप्रतीक्षि समास्थित। अथास्मत्संरक्षकश्रीचित्रायतारवालरामवर्ममहाराजानां परमकृपया प्राचीनग्रन्थप्रकाशनकार्याध्यक्षपदवीमधिरोपिते मयि कदाचित् कयाचन प्रसक्त्या अनन्तशयनसंस्कृतग्रन्थावलावेतत्प्रकाशनमभ्यर्थिता महापण्डिताः विविधकलाप्रचारणबद्धदीक्षाः श्रीसचिवोत्तमाः अन्तरुज्ज्वलद्विविधविज्ञानप्रदीपप्रभाप्रतिफलनमुकुरकलिकेव प्रतिभासमानया करुणामसृणया स्वदृष्ट्या एतां परिपूतां विधायोपजातकौतुकाः सकृपं मदभ्यर्थनामन्वमोदन्त। तदनुसारेण राजकीयशासनमप्युप-

लब्धम् । तदेषाथ मुद्रापिता महाजनकटाक्षामृतशीकरैरात्मानमाप्याय-यितुमीहते । तदनुजानन्तु सर्वे विदितवेद्यास्ते महापण्डितसार्वभौमा इत्यभ्यर्थये ॥

यत्सन्निकर्षादुदितप्रभावा
वाग्भिक्षमा मान्यतमा समिन्धे ।
तस्यादपन्नाय समर्पितेयं
निर्मत्सराणां विदुषां मुदे स्यात् ॥

शुभं भूयात् ।

अनन्तशयनम्,
१५-१२-११५

के. महादेवशास्त्री,
व्याख्याता.
(प्राचीनग्रन्थप्रकाशनकार्याध्यक्षचरः) ।

## सव्याख्याया वास्तुविद्याया विषयानुक्रमणिका ।

॥ श्रीः ॥

श्रीगणेशाय नमः ।

# वास्तुविद्या

पण्डितमहादेवशास्त्रिप्रणीतया लघुविवृत्या
समेता ।

---

## साधनकथनं नाम प्रथमोऽध्यायः ।

गजास्यमगजापुत्रं विघ्नाद्रिभिदुरं शिवम् ।
नमामि वचसां देवीं मन्दारकुसुमप्रभाम् ॥ १ ॥

देवानां दिविषद्द्विषां च समरे वृत्ते पुरा भार्गव-
स्वेदाम्भःकणिकोद्भवः किल महादैत्यो विधूयामरान् ।
लोकानप्युदपीडयत् , पदनतोऽसौ येन संवर्धितो
भूतेशः स समीहितं घटयतां दीनानुकम्पी शिवः ॥ १ ॥

वास्तौ तत्र च तेन ये विनिहिता ब्रह्मादयो देवता
ये वा काश्यपनारदप्रभृतयो ये पारिषद्याः परे ।
ये वा वास्तुवदर्शिताः प्रणमतां सर्वार्थसन्दायका-
स्ते सर्वे प्रतिभां दिशन्तु विषमे वास्त्वाश्रये वस्तुनि ॥ २ ॥

नमस्कृत्य महेशानं विश्वकर्माणमव्ययम् ।
वास्तुविद्याभिधं शास्त्रं विवरीतुं समारभे ॥ ३ ॥

गुरुकृपा सकलार्थदुघा भृशं
मयि भवेद् यदि नाम महीयसी ।
सुकरमेव समं समुदेष्यति
क्व नु पुनः प्रकृते मतिविप्लवः ॥ ४ ॥

G P T 1496 500 6 10-1114

इति दृढं परिचिन्त्य महात्मनां
पदयुगेषु कृतप्रणतिर्मुहुः ।
परमयात्मविशोधनकाङ्क्षया
परमिमां रचये विवृतिं लघुम् ॥ ५ ॥

तदिह मादृशबालिशशेमुषी-
सुलभयाज्ञतया समुपागतम् ।
स्खलितकादि विपद्य गृणन्त्वलं
गुणलवान् सुधियो विदितश्रमाः ॥ ६ ॥

"सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।"

इति सर्वविदितम् । तच्च सुखं शारीरं मानसिकं च यथावन्निर्वृत्तवास्त्वाश्रयेण सम्भवति । सलक्षणे वास्तुनि वासेन हि तदधिष्ठितानां देवानां प्रसादेन सर्वं सुसम्पन्नं सिध्यति । उक्तं च भोजदेवेन —

"सुखं धनानि ऋद्धिश्च सन्ततिः सर्वदा नृणाम् ।
प्रियाण्येषां च संसिद्धयै सर्वं स्याच्छुभलक्षणम् ॥
यच्च निन्दितलक्ष्माऽत्र तदेतेषां विघातकृत् ।
अतः सर्वमुपादेयं यद् भवेच्छुभलक्षणम् ॥
देशः पुरं निवासश्च सभावेश्मासनानि च ।
यद्यदीदृशमन्यच्च तत्तच्छ्रेयस्करं मतम् ॥
वास्तुशास्त्रादृते तस्य न स्याल्लक्षणनिश्चयः ॥
तस्माल्लोकस्य कृपया शास्त्रमेतदुदीर्यते ॥"

इति । ततश्च तत्त्वतो वास्तुशास्त्रमेव लोकस्य सर्वस्योपकारकमिति मन्वानो ग्रन्थकारस्तदेव शास्त्रमारिप्सुरादौ समुचितं स्वाभीष्टदेवतावन्दनं प्रस्तौति— गजास्यमित्यादिनैकेन श्लोकेन । गजास्यो गजाननः गणपतिः । अगजा पार्वती । अगः पर्वतो हिमवान् । दाक्षायणी हि देवी दक्षयागध्वंसानन्तरमग्नौ प्रविष्टा हिमवतः पुत्रीत्वेनावततारेति शिवपुराणे प्रसिद्धम् । गणपतेर्गजाननत्वं च गणेशपुराणे द्रष्टव्यम् । विघ्नाद्रिभिदुरमित्यादिना गणपतिं, मन्दारकुसुमप्रभामित्यनेन वाग्देवीं च विशिनष्टि । विघ्ने अद्रित्वरूपणानुगुणः गणपतौ भिदुरत्वारोपः । भिदुरं पविः । "कुलिशं भिदुरं पविः"

इत्यमरः । अनयोरेवमारोपणेन गणेशकर्तृकं विघ्नभञ्जनमव्यभिचरितमिति व्यञ्जयति । ततश्च ग्रन्थस्याविघ्नपरिसमाप्तये स एवोपास्य इति ध्वन्यते । किञ्च, शिवं मङ्गलाकारम् । "शिवं भद्रं कल्याणं मङ्गलं शुभम्" इत्यमरः । गणपतिप्रसादेन न केवलं ग्रन्थस्याविघ्नपरिसमाप्तिः, किन्तु अविचिन्तितान्यन्यान्यपि शुभानि सिध्यन्तीत्यभिप्रायः । एवं गणपतिं स्तुत्वा ग्रन्थनिर्मितौ समुचितवाक्प्रसादसिद्धये तदधिष्ठानदेवतां कुण्डलिनीरूपां चिच्छक्तिमनुस्मरति — **वचसां देवीमित्यादिना** । मन्दारकुसुमप्रभाम् । मन्दारकुसुमं हि राजार्काख्यं रक्तवर्णं भवति । मातृकामय्याः वाग्विलासजनयित्र्याः कवयितृभिरुपासनीयाया देव्या रक्तवर्णत्वं मन्त्रशास्त्रेषु प्रसिद्धम् । अत एवाहुराचार्यभगवत्पादाः —

> "कवीन्द्राणां चेतःकमलवनबालातपरुचिं
> भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ।
> विरिञ्चिप्रेयस्यास्तरलतरशृङ्गारलहरी-
> गभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी ॥"

इति । श्वेतार्कपक्षे तु वाग्देवीशब्दस्य आह्नायां वृत्तिः । सापि वाक्सिद्धये समुपास्यैव । उक्तं च भगवत्पादैः —

> "शरज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमकुटां
> वरत्रासत्राणस्फटिकघुटिकापुस्तकधराम् ।
> सकृन्नत्वा न त्वा कथमिव सतां सन्निदधते
> मधुक्षीरद्राक्षामधुरिमधुरीणा भणितयः ॥"

इति । यद्वा वाग्देव्या नामरूपवर्णादीनामन्यतः सिद्धत्वे इह मन्दारकुसुमप्रभामित्यस्यान्योऽर्थः—मन्दारः पञ्चसु देवतरुष्वन्यतमः । "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च" इत्यमरः । प्रभाशब्देन सादृश्यं लक्ष्यते । कुसुमशब्दोपादानं च लालित्यद्योतनाय । ततश्च स्वाश्रितानां सर्वाभीष्टप्रदानाद् देवी मन्दारनामकदेवतरुकुसुमसदृशीत्यर्थः । सर्वथा तत्तादृशमहिमानं गणपतिं वाग्देवीं च प्रत्यस्मि प्रह्वः । तौ भक्तानां सर्वान् कामान् पूरयतामिति समुदितो वाक्यार्थः ॥ १ ॥

अथोद्दिष्टं वस्तु निर्दिशति —

प्रणम्य विश्वकर्माणं शिल्पिनां परमेश्वरम् ।
वास्तुविद्यां प्रवक्ष्यामि यथाशक्ति समासतः ॥ २ ॥

इति । **समासत** इति । यथा मन्दमतीनामपि सुग्रहा स्यात्, तथा तन्त्रान्तरेभ्यः संगृह्येत्यर्थः । वास्तुविद्यामिति । गृहाधिकरणभूमेर्गृहस्य च लक्षणाभिधानात् वास्तुविद्येत्यन्वर्थनामानं लक्षणग्रन्थमित्यर्थः । शेषं सुगमम् ॥ २ ॥

तत्रादौ सम्प्रवक्ष्यामि सर्वेषां मानसाधनम् ।
मानेनैवाखिलं लोके वस्तु संसाध्यते यतः ॥ ३ ॥

**तत्रे**त्यादि । तत्र वास्तुविद्यायाम् । सर्वेषां, भूमेः गृहस्य गृहावयवानां, वास्तुकोष्ठादीनां च । मानसाधनस्य प्राथम्ये हेतुमाह — **मानेनै**वेत्यादिना । मीयते परिच्छिद्यते वस्त्वनेनेति मानं प्रमाणसाधनमित्यर्थः । गृहादि हि सलक्षणमेव शुभावहं भवति । तच्च लक्षणं तत्तद्विहितप्रमाणेनैव साध्यमिति मानसाधनस्यावश्यं ज्ञेयतानेन समर्थिता ॥ ३ ॥

तदिदं मानसाधनमेव विवृणोति —

परमाणुः क्रमाद् वृद्धो मानाङ्गुलमिति स्मृतः ।
परमाणुरिति प्रोक्तो योगिनां दृष्टिगोचरः ॥ ४ ॥

इति । **परमाणुरिति** । "परमाणुक्रमाद् वृद्धमि"ति **सयमत**पाठः । **मानाङ्गुलमिति** । मानसाधनमङ्गुलमित्यर्थः । योगिनां दृष्टिगोचर इति प्रोक्त इति सम्बन्धः । यतो योगिनामेव गोचरः, न साधारणजनानाम्, अतस्तत्परिमाणस्य गणयितुमशक्यत्वात्, अनवस्थाप्रसङ्गाच्च तस्यैव मानसाधनप्रथमसोपानतया कल्पनं युक्तमिति भावः ॥ ४ ॥

. परमाणोः क्रमवृद्धिमाह —

परमाणुभिरष्टाभी रथरेणुरिति स्मृतः ।
रथरेणुश्च वालाग्रं लिक्षायूकायवास्तथा ॥ ५ ॥

क्रमशोऽष्टगुणाः प्रोक्ता यवोऽष्टगुणितोऽङ्गुलिः ।

इति । **रथरेणुरिति** । 'त्रसरेणुरि'ति क्वचित् पाठः । उभयोरपि नाम्ना भेदो, न परिमाणतः । **मयमताादिषु** पूर्वोक्त एव पाठो दृश्यते । **वालाग्रमिति** । 'रोमाग्रमि'ति क्वचित् पाठः । रथरेणुरेव वालाग्रमित्युच्यते, न तन्मानान्तरम् । मानान्तरत्वेन अन्यत्रापरिगणनात् । तथा-चाहुः — "अष्टौ परमाणवो रथचक्रविप्रुद्, ता अष्टौ लिक्षा, ता अष्टौ यूका-मध्यः, ते अष्टौ यवमध्यः, अष्टौ यवमध्या अङ्गुलम्" इति । एतेन अत्रत्य-यवशब्दोऽपि यवमध्यपर इति लभ्यते । **अङ्गुलिरिति** । मनुष्यालयमापनो-पयोगिमानाङ्गुलमित्यर्थः । यवश्च रक्तशालिः, महाशालिः, श्वेतशालिः, सौगन्धिकशालिः, हेमशालिः, साधारणशालिरिति षट्प्रकारः । अन्ये तु पञ्चप्रकारमेतमाहुः । 'यवोऽष्टगुणितोऽङ्गुलिरि'त्ययमुत्तमः पक्षः । अन्ययोस्तु एकैकस्य यवस्य ह्रासो भवति ।

एवमेकः प्रकारोऽङ्गुलमानस्य प्रदर्शितः । प्रकारान्तरं तु **कौटल्येन** प्रदर्शितं, यथा — "मध्यमस्य पुरुषस्य मध्यमाया अङ्गुल्या मध्यप्रकर्षो वा अङ्गुलम्" इति । मध्यमश्च पुरुषः अङ्गुलशतोत्सेधोऽर्धनवत्यङ्गुलपरिणाहो भवतीति **भट्टस्वाम्याह** । मध्यप्रकर्षः मध्यप्रदेशपृथुलातिशयः । **श्री-कुमारस्तु** —

"तद्भर्तुर्दक्षिणकरमध्यमामध्यपर्वणः ।
दैर्घ्यं मात्राङ्गुलं श्रेष्ठं नीचं तद्व्याससम्मितम् ॥"

इत्याह । तद्भर्तुरित्यस्य निर्मातुमिष्टस्य गृहस्य भर्तुः स्वामिन इत्यर्थः । **मयः** पुनः **श्रीकुमार**प्रदर्शितस्यास्य मात्राङ्गुलस्य विनियोगे परं विशेषमाह —

"मध्यमाङ्गुलमध्यस्थपर्वमात्रायतं तु यत् ।
कर्तुर्मात्राङ्गुलं प्रोक्तं यागादीनां प्रशस्यते ॥"

इति ॥ ५½ ॥

अङ्गुलं तु भवेन्मात्रं वितस्तिर्द्वादशाङ्गुलः ॥ ६ ॥

**अङ्गुलं** त्विति । अङ्गुलिरिव अङ्गुलशब्दोऽप्यस्ति । अत एव प्रयोगात् क्लीबतापि । एकस्याङ्गुलस्योक्तमानस्य मात्रमिति संज्ञेत्यर्थः । एवमङ्गुलद्वयादीनामपि यथायथं क्रमवृद्ध्या संज्ञाभेदास्तत्र तत्र प्रदर्शिताः ।

तथाहि —

"संज्ञाभेदोऽथ सामान्यमानानां प्रतिपाद्यते ।
स्यादेकमङ्गुलं मात्रा कला प्रोक्ताङ्गुलद्वयम् ॥
पर्व त्रीण्यङ्गुलान्याहुर्मुष्टिः स्याच्चतुरङ्गुलः ।
तलं स्यात् पञ्चभिः षड्भिः करपादाङ्गुलैर्भवेत् ॥
सप्तभिर्दिष्टिरष्टाभिरङ्गुलैस्तूणिरिष्यते ।
प्रादेशो नवभिस्तैः स्याच्छयतालो दशाङ्गुलः ॥
गोकर्ण एकादशभिर्वितस्तिर्द्वादशाङ्गुलः ।
चतुर्दशभिरुद्दिष्टः पादो नाम तथाङ्गुलैः ॥
रत्निः स्यादेकविंशत्या स्यादरत्निः करोन्मितः ।
द्वाचत्वारिंशता किष्कुरङ्गुलैः परिकीर्तितः ॥
चतुरुत्तरयाशीत्या व्यामः स्यात् पुरुषस्तथा ।
षण्णवत्यङ्गुलैश्चापो भवेन्नाडीयुगं तथा ॥
शतं षड्युत्तरं दण्डो नल्वस्त्रिंशद्धनुर्मितः ।
क्रोशो धनुस्सहस्रं तु गव्यूतं तद्द्वयं विदुः ॥
चतुर्गव्यूतमिच्छन्ति योजनं मानवेदिनः ।"

इति । चतुर्दशाङ्गुलस्य शमः शलः परिरय इति संज्ञान्तराण्यप्यन्यत्र दृश्यन्ते । 'द्वाचत्वारिंशता किष्कुरि'त्युक्तः किष्कुरयं खड्गादीनां स्कन्धावारदुर्गादीनां च मापनोपयोगी ज्ञेयः । तथाच कौटल्यः— "द्विचत्वारिंशदङ्गुलस्तक्ष्णः क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम्" इति । एवञ्च ग्रन्थे वक्ष्यमाणः किष्कुरस्य एवेति बोद्धव्यम् । "चतुरत्निर्दण्डो धनुर्नालिका पौरुषं चे"ति वदन् कौटल्यः षण्णवत्यङ्गुलमानस्यैकामेव नाडिकां संज्ञात्वेन मन्यते, न तु नाडीयुगम् । अथैवंविधैः कलादिनामभिः स्वग्रन्थे व्यवहाराकरणाद् अत्रावश्यापेक्षितमात्रमाह — **वितस्तिर्द्वादशाङ्गुल** इति । वितस्यति अरत्न्यपेक्षया उपक्षीयत इति वितस्तिः, अर्धारत्नित्वात् । 'तसु उपक्षये' इति धातुः । कनिष्ठया सह विततेऽङ्गुष्ठे यावदन्तरं भवति तावद् वितस्तिरिति यावत् ॥ ५, ६ ॥

हस्तमानमाह —

**तद्द्वयं हस्त उद्दिष्टः स च किष्कुरिति स्मृतः ।**
**पञ्चविंशतिमात्रस्तु प्राजापत्य इति स्मृतः ॥ ७ ॥**

इति । इदमत्र वेदितव्यं — यवाष्टकप्रमाणैरङ्गुलैः कल्पितो हस्त उत्तमः प्राजयसंज्ञः, सप्तयवप्रमाणैस्तैः कल्पितो मध्यमः साधारणसंज्ञः, षड्यवप्रमाणैस्तैः कल्पितोऽधमो मात्राशयसंज्ञो हस्त इति । हस्तदण्डलक्षणं तन्निर्माणं चान्यत्रोक्तमिह प्रसङ्गात् प्रदर्श्यते । यथा —

"अष्टाभिः सप्तभिः षड्भिरङ्गुलानि यवोदरैः ।
ज्येष्ठमध्यकनिष्ठानि तच्चतुर्विंशतिः करः ॥
सोऽष्टाभिः पर्वभिर्युक्तः करः कार्यो विजानता ।
करस्यार्धं चतुष्पर्वं शेषं स्याद् भक्तमङ्गुलैः ॥
तत्राग्रे पर्वरेखाः स्युस्तिस्रः पुष्पकभूषिताः ।
शेषास्वङ्गुलिरेखासु पुष्पाणि विदधीत न ॥
अत्रार्धे मध्यतः कार्यं द्वेधा पञ्चममङ्गुलम् ।
मध्यं त्रिधाष्टमं कार्यं चतुर्धा द्वादशं ततः ॥
हस्तः स्याङ्गुलमानेन विधेयाङ्गुल इष्यते ।
तत् सार्धं द्विगुणं वापि बाहल्यं तु तदर्धतः ॥
कथितः करभेदोऽयमङ्गुलानां विभेदतः ।
तस्य निर्माणदारूणि देवताश्च प्रचक्ष्महे ॥
खदिराञ्जनवंशादिश्लक्ष्णरूपं मनोरमम् ।
सारवच्च भवेदिष्टं दारु हस्तप्रकल्पने ॥
ग्रन्थिलं लघु निर्दग्धं जीर्णं विस्फुटितं तथा ।
अदृढं कोटराक्रान्तं दारु हस्ताय नेष्यते ॥
त्रिविधस्याप्यथैतस्य पर्वरेखासु देवताः ।
मध्यादारभ्य विज्ञेयाः क्रमेण नव वच्मि ताः ॥
ब्रह्मा वह्निर्यमो विश्वकर्मा नागश्च पायमाम् ।
धायुर्धनाधिपो रुद्रो विष्णुश्चाग्रे जगत्पतिः ॥

वास्तुद्रव्यविभागेषु यानेषु च विशेषतः ।
प्रारभेत यतो मानं कल्पयेद् देवतास्ततः ॥"

इत्यादि । ब्रह्मा वह्निरित्यादेरयमभिप्रायः—हस्तदण्डस्याष्टसु पर्वसु कल्पितेषु चतुर्थपञ्चमपर्वणोर्मध्ये ब्रह्मस्थानं कल्पयेत् । तस्य वामपार्श्वस्थपर्वणि वह्निस्थानं, दक्षिणपार्श्वस्थपर्वणि यमस्थानं च कल्पनीयम् । एवं वामदक्षिणपार्श्वक्रमेणान्येषां च षण्णां देवानां यथाक्रमं स्थानकल्पनायां वामपार्श्वेऽन्तिमो रुद्रः दक्षिणपार्श्वेऽन्तिमो विष्णुश्च भवतः । तथाचायमत्र देवतास्थितिक्रमः सम्पद्येत—रुद्रो वायुः विश्वकर्मा वह्निः ब्रह्मा यमः वरुणः धनदः विष्णुरिति । ततश्च करस्य नवदेवतात्मकथनमुपपन्नं भवतीति । एवं तत्तद्द्रव्यमानेऽपि हस्तधारणममुकामुकदेवस्थानमध्य एव कार्यमित्यस्ति नियमः । स च ग्रन्थान्तरादवगन्तव्यः। स च किष्कुरिति स्मृत इति । 'किष्कुर्हस्ते वितस्तौ चे'त्यमरोक्त्या किष्कुशब्देनात्र चतुर्विंशत्यङ्गुलात्मको हस्त एव ग्राह्य इति ज्ञापयितुं स चेत्युक्तम् । अङ्गुलानां क्रमवृद्ध्या प्रसक्तानन्यानपि हस्तविशेषान् प्रदर्शयति — पञ्चविंशतिमात्र इत्यादि । पञ्चविंशत्यङ्गुल इत्यर्थः । प्राजापत्य इति । प्रजापतेर्विश्वकर्मणः सम्मत इति व्युत्पत्त्या तस्य तद्व्यपदेशः ॥ ७ ॥

षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहः ।
अष्टाविंशाङ्गुलः प्राच्यो वैदेहो नवविंशतिः ॥ ८ ॥
वैपुल्यस्त्रिंशदङ्गुल्यस्त्वेकत्रिंशत प्रकीर्णकः।

षड्विंशतिरित्यादि । कौटल्यस्तु—"चतुरङ्गुलो धनुर्ग्रहः, अष्टाङ्गुला धनुर्मुष्टिः" इत्याह । एवमत्र किष्कुः प्राजापत्यः धनुर्मुष्टिः धनुर्ग्रहः प्राच्यः वैदेहः वैपुल्यः प्रकीर्णक इत्यष्टौ हस्तविशेषा उक्ताः ॥ ८, ८½ ॥

अथैतेषां यथाक्रमं विनियोगमाह—

याने च शयने किष्कुः प्राजापत्यो विमानके ॥ ९ ॥
वास्तूनां च धनुर्मुष्टिर्ग्रामादीनां धनुर्ग्रहः ।
सर्वेषामपि वास्तूनां किष्कुरेवाथवा मतः ॥ १० ॥

इति । यानं वाहनं शिबिकादि । शयनं खट्वादि । विमानकं देवसदनम् । वास्तु गृहाः तदारामादयश्च । ग्रामादीनामिति । इहादिपदाद् देशपरिग्रहः । विनियोगे सर्वसाधारणं पक्षमाह—सर्वेषामित्यादि । क्वचिद्वर्णभेदेनापि विनियोगो दृश्यते । यथा—"धनुर्ग्रहः प्रकीर्णकश्च विप्रस्य, वैपुल्यो धनुर्मुष्टिश्च क्षत्रियस्य, प्राजापत्यो वैदेहश्च वैश्यस्य, किष्कुः प्राच्यश्च शूद्रस्ये"ति । हस्तेन यन्मातुं न शक्यं क्षुद्रवातायनादि, तद् उक्तलक्षणैरङ्गुलैर्मापयेत् । वस्त्रादीन् वितस्तिना, देवबिम्बपीठादीन् तालेन, यागशालां दण्डेन, स्रुक्स्रुवजुहूकुण्डमण्डलानि मात्राङ्गुलेन च मापयेत् । अङ्गुलैरप्यशक्यत्वे मापनाय यवा ग्राह्याः । एवं ग्रामनगपत्तनादिषु च तत्तन्मानविशेषा द्रष्टव्याः ॥ ९, १० ॥

दण्डलक्षणमाह—

उत्तरेण जगत्या वा जन्मना वा प्रकीर्तितः ।
दण्डस्तु सुराधिष्ण्येषु मानुष्येषु चतुष्करः ॥ ११ ॥

इति । अस्य विवरणं प्रदर्शितं मनुष्यालयचन्द्रिकायाम् । यथा—

"उत्तरयुगबाह्यान्तो मन्दिरविस्तार एव देवगृहे ।
श्रेष्ठो दण्डस्तद्वज्जगतिप्रान्तावसानको मध्यः ॥
पादुकयुगळावधिको दण्डः प्रोक्तोऽधमः सुरागारे ।
प्रासादाद् बहिरेतैर्मर्यादाः पञ्च तत्र कल्प्याः स्युः ॥"

इति,

"मानुष्येषु तु बाह्यगेहगतिनिष्पादौ चतुर्हस्तको
दण्डो यष्टिरिति स्मृतोऽष्टगुणितो दण्डोऽत्र रज्जुर्भवेत् ।"

इति च । मानुष्येषु चतुष्कर इति । क्वचित् सार्धचतुष्करः करपञ्चकं च दण्ड इति त्रिविधोऽयं दण्डो वेदितव्यः । जन्म पादुकाख्यमधिष्ठानस्याधाराङ्गम् । जगती चाधिष्ठानस्यावयवान्तरम् । गणनाय संख्यास्थानान्यप्यावश्यकानीति तानि प्रदर्शयामः—

"एकं दश शतमस्मात् सहस्रमनु चायुतम् ।
नियुतं प्रयुतं तस्मादर्बुदन्यर्बुदे अपि ॥

वृन्दखर्वनिखर्वाणि शङ्कुपद्माम्बुराशयः ।
ततः स्यान्मध्यमन्त्यं च परं चापरमप्यतः ॥
परार्धं चेति विज्ञेयं दशवृद्ध्योत्तरोत्तरम् ।
सङ्ख्यास्थानानि कथितान्येवमेतानि विंशतिः ॥"

इति । एकादिसङ्ख्यानां निर्दिष्टाः शय्यादिसंज्ञाः लोकतः, उक्तादः छन्दश्शास्त्राच्चावगन्तव्याः । कटपयादिसङ्ख्यास्तु नात्रोपयुज्यन्ते ॥ ११ ॥

अथ मानमिव मातापि परमं साधनमेवेति कृत्वा तत्प्रकरणे मातुर्लक्षणं प्रस्तौति—

अथ वक्ष्यामि संक्षेपाच्छिल्पिनां लक्षणं पृथक् ।
स्थपतिः स्थापनार्हः स्यात् सर्वशास्त्रविशारदः ॥ १२ ॥

इति । स्थापनार्हः पादुकाप्रक्षेपोत्तरारोपणस्तूपीनिवेशनादिप्रधान कर्मस्वधिकारी । **सर्वशास्त्रविशारद** इति । इह शास्त्रशब्दः कर्मणोऽप्युपलक्षकः । तथाच गुरुक्रमागतं सकलं शिल्पशास्त्रं विदन् तदुक्तसकलशिल्पकलापं स्वयं कर्तुं कारयितुं च यः शक्नोति स इत्यर्थः । केवलशास्त्रज्ञस्य केवलकर्मज्ञस्य वा न स्थापनार्हता । तथाचाभियुक्ताः —

"यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ।
स मुह्यति क्रियाकाले दृष्ट्वा भीरुरिवाहवम् ॥
केवलं कर्म यो वेत्ति शास्त्रार्थं नाधिगच्छति ।
सोऽचक्षुरिव नीयेत विवशोऽन्येन वर्त्मसु ॥"

इति । सर्वशब्देन शिल्पोपयोगीनि शास्त्रान्तराण्यपीह गृह्यन्ते । तेषु कानिचिद् ग्रन्थकार एवोपरि वक्ष्यति ॥ १२ ॥

नहीनाङ्गोऽतिरिक्ताङ्गो धार्मिकस्तु दयापरः ।
अमात्सर्योऽनसूयश्च तान्त्रिकस्त्वभिजातवान् ॥ १३ ॥

नहीनेत्यादि । नहीनाङ्गः अङ्गवैकल्यरहितः । अभिजातवान् कुलीनः । शेषं सुगमम् ॥ १३ ॥

गणितज्ञः पुराणज्ञ आनन्दात्माप्यलुब्धकः ।
चित्रज्ञः सर्वदेशज्ञः सत्यवादी जितेन्द्रियः ॥ १४ ॥

**गणितज्ञ** इत्यादि। गणितमित्यन्येषां वास्तुशास्त्राङ्गानामुपलक्षणम्। तथा च ग्रन्थान्तरवचनं—

"सामुद्रं गणितं चैव ज्योतिषं छन्द एव च।
सिराज्ञानं तथा शिल्पं यन्त्रकर्मविधिस्तथा॥
एतान्यङ्गानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान्।"

इत्यादि। आनन्दात्मा नित्यतृप्तः॥ १४॥

**अरोगी चाप्रमादी च सप्तव्यसनवर्जितः।**
**सुनामा दृढबन्धुश्च वास्तुविद्याब्धिपारगः॥ १५॥**

**अरोगी**त्यादि। प्रमादः कार्येष्वनवधानता। सप्तव्यसनानि पानाक्षादीनि प्रसिद्धानि। 'सदा व्यसनवर्जित' इति पाठान्तरम्। वास्तुविद्या वास्तुशास्त्रम्। तत्राब्धित्वारोपणं च दुरवगाहत्वबहुविस्तृतत्वादिगुणसाधर्म्येण। **दृढबन्धुरिति**। 'दृढबुद्धिरि'ति **मयमत**पाठो युक्ततरः। एकैकस्यापि गुणस्यैकैकं कर्मोपयोगि फलमस्तीति स्थूलदृशामपि ज्ञातुं शक्यमिति नात्र तद् विविच्यते॥ १५॥

शिल्पिविशेषस्य सूत्रग्राहिणो लक्षणमाह—

**स्थपतेस्तस्य शिष्यो वा सूत्रग्राही सुतोऽथवा।**
**स्थपत्याज्ञानुसारी च सर्वकर्मविशारदः॥ १६॥**

**इति**। 'शिष्यो वा सुतोऽथवे'त्यनेन स्थपत्याज्ञानुसारिता स्थपतिप्रत्येयता च दर्शिता। **सर्वकर्मविशारद** इति। अनेन शिल्पोपयोगिसर्वशास्त्रसामान्यज्ञानवत्त्वे सति सर्वकर्मविशेषज्ञानवत्त्वं सूत्रग्राहिणो लक्षणमित्युक्तं भवति। प्रायो गुणैरयमपि स्थपतिना तुल्यः स्यादित्यभिप्रायः॥ १६॥

अस्यैव गुणान्तरमप्याह—

**सूत्रदण्डप्रमाणज्ञो मानोन्मानप्रमाणवित्।**

इति। सूत्रप्रमाणं दण्डप्रमाणं च जानातीति तादृशः। 'सूत्रदण्डप्रपातज्ञ' इति **मयमत**पाठः। उन्मानम् ऊर्ध्वमानं तुलामानादि। वैखा-

नसागमे मरीचिप्रोक्ते अस्य विवरणमेवं दृश्यते—"मानं, प्रमाणम्, उन्मानं, परिमाणम्, उपमानं, लम्बमानमिति षण् मानानि। मानस्य—आयामः, आयतं, दीर्घम्, इति व्यवहारः। प्रमाणस्य—विस्तारः, विस्तृतं, तारं, विसृतं, विसृतिः, व्यासः, विसारितं, विपुलं, ततं, विष्कम्भ इति। उन्मानस्य—बहलं, घनम्, उच्छ्रायः, तुङ्गम्, उन्नतम्, उदयः, उत्सेध इति। उन्नतस्य— निष्क्रामः, निष्कृतिः, निर्गमः, निर्गतिः, उद्गम इत्यादि। परिमाणस्य—नाहः, प्रवेशनमिति। उपमानस्य—निवृत्तिः, विवरमिति। लम्बमानस्य — सूत्रं, लम्बमानमिति" (पटलः २४) इति ॥ १६½ ॥

वर्धकिलक्षणमाह—

तक्षितानां तक्षकेणाप्युपर्युपरि युक्तितः ॥ १७ ॥

वृद्धिकृद् वर्धकिः प्रोक्तः सूत्रग्राह्यनुगः सदा।

इति। तक्षकेण तक्षितानां वृद्धिकृदिति योजना। तक्षकाख्येन तक्षितानां दार्वादीनां परस्परमेलनादिरूपां वृद्धिं यः करोति, स इत्यर्थः। अनेन वर्धकिशब्दव्युत्पत्तिरपि दर्शिता ॥ १७, १७½ ॥

तक्षकलक्षणमाह—

तक्षणात् स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः ॥ १८ ॥

मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः।

गुरुभक्तः सदा हृष्टः स्थपत्याद्यनुगः सदा ॥ १९ ॥

इति। स्थूलसूक्ष्माणामिति। द्रव्याणामिति विशेष्यम्। द्रव्याणि च शिलादार्विष्टकादीनि। मृदित्यादि। इदमर्धं क्वचिन्न पठ्यते। स्थपत्याद्यनुग इति। इदमुक्तं भवति — स्थपतिर्हि तत्तद्गृहोचितं शिल्पं शास्त्रानुसारेण देशानुसारेण च मनसा निश्चिनोति। तच्छिल्पप्रमाणः ज्ञानाय सूत्रग्राही सूत्रेण परिमाति। तक्षकस्तदनुरोधेन स्वरूपविवेकाय तक्षति। वर्धकिस्तु तक्षितं यथोचितं सन्धत्ते इत्ययं क्रियाक्रमः। तत्र सर्वत्र युक्तायुक्तपरीक्षणाद्यवसरेषु तक्षणमावश्यकमिति तक्षकः 'स्थपत्याद्यनुगसदे'त्युक्तमिति ॥ १८, १९ ॥

एभिर्विनापि सर्वेषां कर्म कर्तुं न शक्यते ।
तस्मादेतत् सदा पूज्यं स्थपत्यादिचतुष्टयम् ॥ २० ॥

**एभिरित्यादि ।** एभिः उक्तैः स्थपतिसूत्रग्राहिवर्धकितक्षकैश्चतुर्भिः । **विनापीति ।** इहापिशब्दः सर्वेषामित्यनेन योज्यः । 'विना हि' इति **मयमत**पाठः । सर्वेषां वास्तूनां वास्त्वङ्गानां च ॥ २० ॥

एभिः स्थपत्यादिभिरत्र लोके
विना ग्रहीतुं सुकृतं न शक्यम् ।
तैरेव सार्धं गुरुणाथ तस्माद्
भजन्ति मोदं भजमानमर्त्याः ॥ २१ ॥

**एभिः स्थपत्यादिभिरित्यादि ।** विनेत्यस्य एभिरित्यनेनान्वयः । सुकृतं सुष्ठु निष्पादितम् । गुरुणा शान्तिकपौष्टिकादिक्रियाकलापकर्त्रा । एतेन गृहाद्यारम्भे ग्रन्थान्तरोक्तलक्षणगुरुवरणमप्यवश्यं कर्तव्यमिति सूचयति । इयमत्र गुरुवरलक्षणसङ्ग्रहकारिका—

"विप्रः कुलीनः कृतसंस्कृतौघः
स्वधीतवेदागमतत्त्ववेत्ता ।
वर्णाश्रमाचारपरोऽधिदीक्षो
दक्षस्तपस्वी गुरुरास्तिकोऽस्तु ॥"

इति । **तस्मादिति ।** यस्मादेभिर्विना सुकृतं ग्रहीतुं न शक्यं, तस्मादित्यर्थः । तस्माद् गुरुणा सार्धं तैरेव मर्त्याः मोदं भजन्तीति योजना । अतस्ते स्थपत्यादयः सदा पूज्या एवेति पूर्वोक्तस्योपोद्बलकमिदं वाक्यम् । भजमानाः स्थपत्यादीनित्यार्थम् । 'भजन्ति मोक्षं भवतस्तु मर्त्या' इति **मयमत**पाठः ॥ २१ ॥

इति वास्तुविद्याव्याख्यायां साधनकथनं नाम
प्रथमोऽध्यायः ।

---

## अथ वसुधालक्षणं नाम द्वितीयोऽध्यायः ।

अथ मानं मातारं च साधनमुक्त्वा मेयं वक्तुमुपक्रमते—

**अथातो वास्तुविद्यां वै प्रवक्ष्यामि यथापुरम् ।**
**पूर्वं भूमिं परीक्षेत पश्चाद् वास्तु समारभेत् ॥ १ ॥**

इति । **वास्तुविद्यामिति** । वास्तुर्नाम गृहादिभूमिः, 'वेश्मभूर्वास्तुरस्त्रियाम्' इत्यभिधानात् । तस्य विद्या लक्षणप्रतिपादनरूपा, तामित्यर्थः । वेश्मनिवेशनार्हभूमिलक्षणमिति यावत् । यद्यपि 'वास्तु स्याद् गृहभूपुर्योर्गृहे सीमसुरस्रयोः' इत्यभिधानान्तराद् वास्तुशब्देन गृहादिरपि ग्रहीतुं शक्यते । अथापि प्रतिज्ञानुरोधेनेहाध्याये वक्ष्यमाणं भूलक्षणमेव भवतीति तथा विवृतम् । अत एवोत्तरार्धेऽप्याह—'पूर्वं भूमिं परीक्षेत पश्चाद् वास्तु समारभेत्' इति । मयस्तु भूमिं वस्तुशब्देन, गृहादिकं वास्तुशब्देन च मुख्यया वृत्त्या व्यवहरति । तथा च तद्वचनं —

"भूरेव मुख्यं वस्तु स्यात् तत्र जातानि यानि हि ।
प्रासादादीनि वास्तूनि वस्तुत्वाद् वस्तुसंश्रयात् ॥
वस्तून्येव हि तान्येव प्रोक्तान्यस्मिन् पुरातनैः ।"

इति । 'वसेस्तुन्'(उ० १. ७८) इति तुनम्, 'अगारे णिच्च' (उ० १. ७९) इति णिद्भावं च गृहार्थकवास्तुशब्दनिष्पत्त्यै विदधतां शाब्दिकानामपि मयोक्तमेवाभिप्रेतमित्यवगम्यते । एवञ्च साधनकथनानन्तरं पूर्वोक्तेन वाक्येन ग्रन्थोपक्रमः प्रतिज्ञायत इति नाशङ्कनीयम् । ग्रन्थप्रतिज्ञायाः पूर्वमेव कृतत्वात्, प्रकृताध्यायविषयप्रतिज्ञाया असङ्ग्रहापत्तेश्च । **यथापुरमिति** । पुरा यथा विश्वकर्ममयादिभिरुपदिष्टा तामनतिक्रम्य । तन्मतानुसारेणेत्यर्थः । **पूर्वं भूमिं परीक्षेतेत्यादि** । भूम्यां हि गृहादि निवेश्यते, अतो भूपरीक्षणमेव गृहारम्भात् प्राक् कर्तव्यमित्यर्थः । **समारभेदिति** । अनुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वात् परस्मैपदम् ॥ १ ॥

अथ भूपरीक्षणोपायेषु बहुषु प्रथमं प्लवरूपमुपायं प्रदर्शयति —

**पूर्वप्लवा वृद्धिकरी उत्तरा धनदा स्मृता ।**
**अर्थक्षयकरीं विद्यात् पश्चिमप्लवनां ततः ॥ २ ॥**

दक्षिणप्लवना पृथ्वी नराणां मृतिदा भवेत् ।

इति । कचिन्मातृकायामस्माच्छ्लोकात् प्राक् "प्लवाप्लवं प्रवक्ष्यामि नराणां च शुभाशुभमि"त्येकमर्धमधिकं दृश्यते । इह प्लवशब्दो नीचनिम्नादिपर्यायः । तथाच पूर्वप्लवा पूर्वस्यां दिशि निम्नेत्यर्थः । उत्तरा उत्तरस्यां दिशि निम्नेत्यर्थः ।

"प्लवः प्लक्षे प्लुतौ कपौ ।
शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः ॥
क्रमनिम्नमहीभागे"

इति हेमचन्द्रः । वृद्धिकरी, कस्य, तत्र वसताम् इत्यार्थम् ॥ २½ ॥

इह प्रस्तुतानामेव भूमीनां शिल्पशास्त्रप्रसिद्धान् संज्ञाभेदानाह —

वारुणोच्चसमायुक्ता नीचमाहेन्द्रसंयुता ॥ ३ ॥

गोवीथिरिति सा ज्ञेया ऐन्द्रोच्चा नीचवारुणा ।
जलवीथिरिति प्रोक्ता वास्तुज्ञानविशारदैः ॥ ४ ॥
सोमोच्चा यमनीचा च यमवीथीति कथ्यते ।
यमोच्चा सोमनीचा च गजवीथीति कथ्यते ॥ ५ ॥

इति । 'पूर्वप्लवे'त्यस्य विवरणं — वारुणोच्चसमायुक्ता नीचमाहेन्द्रसंयुतेति । तस्या भूमेः संज्ञामाह — गोवीथिरिति । प्रकृतग्रन्थोपजीवी मनुष्यालयचन्द्रिकाकारस्तु —

"इन्द्राशादिनतावनी तदितराशाद्युन्नताद्यै क्रमाद्
गोवह्न्यन्तकभूतवारिफणभून्मातङ्गधन्याह्वयाः ।
वीथ्योऽत्र क्रमशोऽभिवृद्धिधनहान्यन्तार्थहानिप्रदा
दारिद्र्यात्मजहानिवित्तशुभदास्ताद्दक्षिता तस्युयाम् ॥"

इत्याह । एतदनुरोधेनात्रत्यवारुणशब्दः माहेन्द्रीव्यतिरिक्तानां सर्वासां दिशामुपलक्षको विज्ञेयः । यद्वा तदितरशब्देन तत्प्रतियोगिभूता दिग् वा गृह्यताम् उभयसंवादाय । एवमुत्तरत्रापि । 'पश्चिमप्लवने'त्यस्य विवरणम् — ऐन्द्रोच्चा नीचवारुणेति । तस्याः संज्ञा — जलवीथिरिति । एवं यमवीथ्यादावपि ॥ ३–५ ॥

इत्थमुच्चनीचभावेन संज्ञाभेदाः प्राच्यादिषु प्रदर्शिताः । अथ कोणेषु-पदिशति —

ईशोच्चं निर्ऋतिनीचं भूतलं भूतवीथिकम् ।
आग्नेयोच्चं वायुनीचं नागवीथी प्रशस्यते ॥ ६ ॥

वायूच्चमग्निनीचं यद् वीथीं वैश्वानरीं विदुः ।
निर्ऋत्युच्चमीशनीचं धनवीथीत्युदाहृतम् ॥ ७ ॥

इति । 'ईशोच्चमि'त्यस्य अर्धस्यानन्तरं 'निर्ऋत्युच्चमि'त्यस्यार्धस्य पाठे प्रक्रमः कश्चिदनुसृतो भवति । आग्नेयोच्चमित्यादिषु नपुंसकेषु भूतलं विशेष्यम् । प्रशस्यत इति । इहानुक्तफलास्वन्यासु भूमिषु फलानि तु प्रदर्शितचन्द्रिकावचनादवगन्तव्यानि । मातृकान्तरे पुनः 'वारुणोच्चे'त्यादि'धनवीथीत्युदाहृतमि'त्यन्तस्यार्धाधिकश्लोकचतुष्कस्य स्थाने पाठान्तरमुपलभ्यते । तत्र विशेषानुपलम्भान्नेह तत् प्रदर्श्यते ॥ ६,७ ॥

अन्तरालेषूच्चनीचभावेन स्थितानां भूमीनां संज्ञाः प्रदर्शयति —

इन्द्राग्न्यन्तरमुच्चं स्यान्नीचं वरुणवातयोः ।
वास्तु पैतामहं विद्यान्नराणां कुरुते शुभम् ॥ ८ ॥

याम्याग्न्यन्तरमुच्चं स्यान्नीचं मारुतसोमयोः ।
सुपथं नाम तद्वास्तु प्रशस्तं सर्वकर्मणाम् ॥ ९ ॥

सोमेशानान्तरं नीचमुच्चं निर्ऋतिकालयोः ।
दीर्घायुर्नाम तद्वास्तु प्रशस्तं कुलवर्धनम् ॥ १० ॥

ईशानेन्द्रान्तरं नीचमुच्चं वरुणरक्षसोः ।
पुण्यकं नाम तद्वास्तु द्विजानां च शुभावहम् ॥ ११ ॥

इन्द्राग्न्योरन्तरं नीचमुच्चं वायुजलेशयोः ।
अपथं नाम तद्वास्तु वैराय कलहाय च ॥ १२ ॥

कालाग्न्योरन्तरं नीचमुच्चं स्याद् वायुसोमयोः ।

रोगकृन्नाम तद्वास्तु नराणां रोगवृद्धिकृत् ।
निर्ऋत्यन्तकयोर्नीचमुच्चं सोमशिवान्तरम् ॥ १४ ॥
अर्गलं नाम तद्वास्तु ब्रह्महत्यादिनाशकृत् ।
रुद्रेन्द्रान्तरमुच्चं स्यान्नीचं वरुणरक्षसोः ॥ १५ ॥
श्मशानं नाम तद्वास्तु केवलं कुलनाशनम् ।

इति । वास्तु भूमिः । पैतामहमिति । श्रीकुमारस्तु —
"इन्द्राग्न्योरन्तराद्यन्तरालनीचवशात् क्रमात् ।
पैतामहापथाख्यौ च श्मशानं रोगवर्धनम् ॥
आसुरं प्रथमं पुण्यं दीर्घायुश्चेति चीथयः ।"

इत्याह । कचिन्मातृकायां दृष्टः 'अर्गल'स्थाने 'श्मशान'पाठः, 'श्मशान'स्थाने रोगकृत्'पाठश्च प्रदर्शितशिल्परत्नमतानुसारिणौ भवतः । ब्रह्महत्यादिनाशकृदिति । ब्रह्महत्यादिमहापातकोत्पादनेन तत्र वसतां नाशं करोतीत्यर्थः । शेषं सुगमम् ॥ ८–१५½ ॥

उक्तानामेव मूलानामवान्तरभेदानाह —

नीचमग्नौ भवेदुच्चं निर्ऋतीशानवायुषु ॥ १६ ॥
श्येनकं नाम तद्वास्तु नाशाय मरणाय च ।
रुद्राग्निवरुणेपूच्चं नीचं स्यान्निर्ऋतौ तथा ॥ १७ ॥
श्वमुखं नाम तद्वास्तु दारिद्र्यं कारयेत् फलम् ।
निर्ऋत्यग्निशिवेपूच्चं नीचं वाय्विन्द्रयोस्तथा ॥ १८ ॥
ब्रह्मघ्नं नाम तद्वास्तु नेष्टं प्राणभृतां सदा ।
अग्नौ यदि भवेदुच्चं नीचं निर्ऋतिरुद्रयोः ॥ १९ ॥
वातनिम्नं च तद्वास्तु स्थावरं नाम शोभनम् ।
उच्चं निर्ऋतिभागे स्यान्नीचं ज्वलनवातयोः ॥ २० ॥

रुद्रनिम्नं च तद्वास्तु स्थण्डिलं नाम शोभनम् ।
रुद्रोच्चं यदि निम्नं स्याद् वह्नौ निर्ऋतिवातयोः ॥ २१ ॥
शाण्डुलं नाम तद्वास्तु प्रापयत्यशुभं सदा ।
निर्ऋत्यग्नियमेपूच्चं नीचं चन्द्रमसं प्रति ॥ २२ ॥
द्विजेन्द्राणां तु सुस्थानमयनी समुदाहृता ।
नीचमिन्द्रे भवेदुच्चं निर्ऋत्यां पश्चिमानिले ॥ २३ ॥
सुलभं नाम तद्वास्तु राजराष्ट्रविवर्धनम् ।
सौम्येशपवनेपूच्चं नीचं भवति चेद् यमे ॥ २४ ॥
नाम्ना वास्तुवरं नाम वैश्यानां तदभीष्टदम् ।
नीचं वारुणमुच्चं चेदीशानेन्द्राग्निपु क्रमात् ॥ २५ ॥
सत्पथं नाम तद्वास्तु शूद्राणां तदभीष्टदम् ।

इति । **स्थापरं नाम शोभनमिति** । 'स्थावराणां न शोभनमि'ति पाठे वृक्षाणामपि तद्वास्तु न शुभावहं, किमुत नराणामित्यर्थो वर्णनीयः । सञ्ज्ञा च ग्रन्थान्तरादवगन्तव्या । 'स्थावराणामशोभनम्' इति चान्यत्र पाठः । **वातनिम्नमिति** । 'वातघ्नं नाम' इति क्वचित् पाठः । **निर्ऋत्यग्नियमेपूच्चमिति** । 'निर्ऋत्यग्निशिवेपूच्चमि'ति पाठान्तरम् । एवमिह प्रकरणे बहुत्र पाठा भिन्नभिन्ना दृश्यन्ते । तेषां युक्तायुक्तविचारस्तु सम्प्रतिपत्तप्रमाणान्तरानुपलम्भादस्माभिरुपेक्षितः । १६–२५½ ॥

अथ प्लवनगन्धवर्णरसैरपि विप्रादीनां प्रशस्ता भूमयः प्रदर्श्यन्ते—

या तु सोमप्लवा चैव कुशदर्भैरलङ्कृता ॥ २६ ॥
आज्यगन्धा च सा भूमिर्ब्राह्मणानां प्रशस्यते ।
पूर्वप्लवा च रक्ता च कुशदर्भैरलङ्कृता ॥ २७ ॥
रक्तगन्धा च या भूमिः क्षत्रियाणां प्रशस्यते ।
दक्षिणप्लवनोपेता कुशदर्भैरलङ्कृता ॥ २८ ॥

अन्नगन्धा च या भूमिः सा वैश्यानां प्रशस्यते।
पश्चिमप्लवनोपेता दूर्वाभिश्च समन्विता ॥ २९ ॥

सुरागन्धा च या भूमिः शूद्राणां समुदाहृता।
इन्द्रोन्नतं पुत्रनाशं वह्न्युन्नतमथार्थदम् ॥ ३० ॥

अग्निनीचोऽर्थनाशः स्याद् याम्योन्नतमरोगकृत्।
निर्ऋत्युच्चं श्रियो लाभं पुत्रदं वरुणोन्नतम् ॥ ३१ ॥

वायून्नतं द्रव्यनाशं सौम्योन्नतमथो गदः।
ईशानोच्चं महाक्लेशं वास्तु विद्यादिति क्रमात् ॥ ३२ ॥

या तु सोमलयेत्यादि। 'रक्तगन्धा' 'अन्नगन्धा' 'सुरागन्धे'ति त्रयाणां स्थाने यथाक्रमम् 'अश्वगन्धा' 'पलाशगन्धा' 'पशुगन्धे'ति क्वचित् पाठः। रक्ता चेति। एषा भूमिः क्षत्रियस्य। विप्रस्य तु भूमेर्वर्णः शुक्लो ग्राह्यः। एवं वैश्यभूमिः पीता, शूद्रभूमिः कृष्णेत्यूहनीया। रसतस्तु विप्रादिक्रमतः स्वादुकषायतिक्तकटुका भुवो ग्राह्याः। शब्दस्पर्शगन्धान्तरादिभिस्तु —

"हयेभवेणुवीणाब्धिदुन्दुभिध्वनिसंयुता।
पुन्नागजातिपुष्पाब्जधान्यपाटलगन्धकैः॥
पशुगन्धसमा श्रेष्ठा सर्वबीजप्ररोहिणी।
एकवर्णा घना स्निग्धा सुखसंस्पर्शनान्विता॥"

भूमिः सर्वेषामुपादेया। ग्रन्थोक्तप्ररोहविषये वराहमिहिर एवमाह —

"कुशयुक्ता शरबहुला दूर्वाकाशावृता क्रमेण मही।
अनुवर्णं वृद्धिकरी"

इति। स एव भूप्लवे च विप्रादिषु विशेषमाह —

"उदगादिप्लवमिष्टं विप्रादीनां प्रदक्षिणेनैव।
विप्रः सर्वत्र वसेदनुवर्णमथेष्टमन्येषाम् ॥"

इति। अनुवर्णमित्यस्यायमभिप्रायः — ब्राह्मणः उत्तरप्लवापूर्वप्लवादिषु चतसृष्वपि भूमिषु वसेत्। क्षत्रियः पूर्वप्लवादिषु तिसृषु, वैश्यः दक्षिणप्लवा-

न्यग्रोधः पूर्वतो धन्यो दक्षिणे च उदुम्बरः
अश्वत्थः पश्चिमे श्रेष्ठः प्लक्षोऽप्युत्तरतः शुभः॥ ३३॥

इति। न्यग्रोध इत्यादि । तथा च गुरुदेवः—

'न्यग्रोधोदुम्बराश्वत्थप्लक्षाः पूर्वादिगाः शुभाः।
सर्वत्र केसराश्चूताः पुन्नागा नागडाडिमाः॥
पनसाश्चम्पकाः पूगा नालिकेराश्च शोभनाः।''

इति। चन्द्रिकाकारः कश्चित् तु विशेषमाह—

''विप्राणां पूर्वागुन्नतधनदनतोदुम्बराद्या शुभा स्यात्
प्राङ्निम्ना वारुणोच्चा चलदलसहिता भूः शुभा बाहुजानाम्।
प्रागुच्चाब्धीशनिम्ना वटतरुसहिता भूर्विशां पादजानां
सा सप्लक्षा तथाचेद् यमनतधरणी चान्यथा सर्ववर्ज्याः॥''

इति। एवं च सति कश्चिन्मातृकायां 'वर्णक्रमेणाथ विद्याद् वृक्षान् शास्त्रविशारद' इत्येकमर्धमधिकतया दृश्यमान, समनन्तरश्लोके न्यग्रोधाश्वत्थपदयोर्व्यत्यस्तः पाठश्च उक्तगुरुदेवादिवचनेन विरुध्यत इति बोद्धव्यम्॥ ३३॥

न्यग्रोधादीनामेषां वृक्षाणां निषिद्धा दिशोऽपि प्रदर्शयति—

अश्वत्थः पूर्वतो वर्ज्यो दक्षिणे प्लक्ष एव च
न्यग्रोधः पश्चिमे भागे उत्तरे चाप्युदुम्बरः॥ ३४॥

अश्वत्थः पूर्वत इति। इहापि कश्चिन्मातृकायां न्यग्रोधाश्वत्थपदयोः व्यत्यस्तत्वं दृश्यते॥ ३४॥

अश्वत्थोऽग्निभयं कुर्यात् प्लक्षः कुर्यात् प्रमादकम्।
न्यग्रोधः शस्त्रसम्पातं कुक्षिरोगमुदुम्बरः॥ ३५॥

अश्वत्थोऽग्निभयमित्यादि। गर्गस्त्वाह—

''अश्वत्थे तु भयं ब्रूयात् प्लक्षे ब्रूयात् पराभवम्।
न्यग्रोधे राजतः पीडां नेत्रामयमुदुम्बरे॥''

इति॥ ३५॥

भुवः कर्षणेऽपि दृष्टेन निमित्तेन तच्छुभाशुभत्वं जानीयादित्याह—

काष्ठेष्टकातुषाङ्गारपाषाणास्थिसरीसृपान्
हलाग्रेणोद्धृतान् दृष्ट्वा तत्र विद्यादिदं फलम् ॥ ३६ ॥

काष्ठेष्वग्निभयं विद्यादिष्टकासु घनागमम्।
अङ्गारेषु तथा रोगं तुषेष्वेव धनक्षयम् ॥ ३७ ॥

पाषाणेष्वपि कल्याणं कुलनाशं तथास्थिषु
सरीसृपेषु सर्वेषु स्तेनेभ्यो भयमादिशेत् ॥ ३८ ॥

इति । अङ्गारेषु तथेति । 'अङ्गारेषु तथा रोगं तुषेष्वेव धनक्षयम्' इति पाठे 'काष्ठे'त्यादिपरिगणनक्रमाननुरोधो द्रष्टव्यः। सरीसृपाः सर्पास्तज्जातीया अन्येऽपि। 'स्तेनेभ्य' इत्यस्य स्थाने 'तादृग्भ्य' इति पाठान्तरम्। एवञ्च गर्भे काष्ठादिना दुर्निमित्तेनोपलक्षिता भूमिरपि वर्जनीयेत्युक्तं भवति। एषापि त्याज्या—

"वृत्तार्धेन्दुनिभा त्रिपञ्चरसकोणा शूलशूर्पाकृति-
मैत्स्यानेकपकूर्मपृष्ठकपिलावक्त्रोपमा मेदिनी।
भस्माङ्गारतुषास्थिकेशचितिवल्मीकादिभिः संयुता
वर्ज्या मध्यनता सगर्भकुहरा विस्रा विदिक्स्थापि च ॥"

इदमत्रावधेयम्—उक्तमार्गेणाकारवर्णरसगन्धशब्दस्पर्शप्ररोहादिभिर्दृष्टादृष्टपरीक्षणैस्तत्तद्वर्णोचितां भुवमुपलभ्य

"अपक्रामन्तु भूतानि देवताश्च सराक्षसाः।
वासान्तरं व्रजन्त्वस्मात् कुर्यां भूमिपरिग्रहम् ॥"

इति मन्त्रमुच्चार्य तत्रस्थदेवतानां बलिदानपूर्वकं शुभे मुहूर्ते भुवं परिगृह्य गुल्मादिकं छित्त्वा समीकृत्य तत्तद्वर्णविहितनिष्पावादिधान्यवापाय भूशुद्धिनिमित्ताय भुवः कर्षणं यथाविधि हलेन कुर्यात्। क्रियमाणे च तस्मिन्नशुभनिमित्तकाष्ठाङ्गारादिदर्शने सति भूम्यन्तरलाभे तस्या भूमेस्त्यागः श्रेयान्।

पश्चिमप्लवयोर्द्वयोः, शूद्रः पश्चिमप्लवायामेवेति । अथो गद इति । 'अथागद' इति पाठान्तरम् । एवमिह कानिचिद् परीक्षणानि ग्रन्थकृता प्रतिपादितानि । अन्यानि परीक्षणानि तु ग्रन्थान्तरेषु बहूनि दृश्यन्ते। तेषु कानिचित् सुग्रहाय प्रदर्श्यन्ते । अत्र वराहमिहिरः —

"गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम् ।
यद्यूनमनिष्टं तत् समे समं धन्यमधिकं यत् ॥
श्वभ्रमथवाम्बुपूर्णं पदशतमित्वागतस्य यदि नोनम् ।
तद्धन्यं यच्च भवेत् पलान्यपामाढकं चतुष्षष्टिः ॥"

इति । इहोक्तयोर्द्वितीयपरीक्षां किञ्चिद् विवृण्वन्नाह गुरुदेवः —

"तत्खातं वा जलापूर्णं कृत्वा पदशतं व्रजेत् ।
पुनरागच्छतः प्राग्वत् पूर्णं चेद् भूमिरुत्तमा ॥
यवन्यूना मध्यमा स्यात् त्याज्या न्यूना ततोऽधिकम् ।"

इति । तृतीया परीक्षा —

"आमे वा मृत्पात्रे श्वभ्रस्थे दीपवर्तिरभ्यधिकम् ।
ज्वलति दिशि यस्य शस्ता सा भूमिस्तस्य वर्णस्य ॥"

इति । अस्यायमभिप्रायः — सङ्कीर्णशुभाशुभलक्षणस्य भूतलस्य परीक्षार्थं मध्ये हस्तमात्रं खात्वा तदन्तर्गोमयेनोपलिप्य यथोक्तं मण्डलं वर्णकैर्विरचय्य तदुपरि धान्यपूरितमामं घटं तदुपरि शरावं च सलक्षणं निधाय तत्र पूर्वादिषु चतसृषु दिक्षु कपिलाघृताभ्यक्ताः यथाक्रमं विप्रादिविहिताः सितरक्तपीतकृष्णवर्णाश्चतस्रस्तुल्यप्रमाणाः कार्पासतन्तुवर्तीर्न्यसेत् । केचित् तत्तद्वर्णनामचिह्नितानेकवर्णानां वर्तीनां न्यसनमिच्छन्ति । अथ ताश्चतस्रः समाः कृत्वा इष्टदेवतां सम्पूज्य समकालं प्रज्वाल्य शरावं फलकादिभिर्यथोचितमाच्छादयेत् । अथ घटिकाद्वये व्यतीते पिधानमुद्धृत्य पश्येत् । तदा यद्वर्णविहिता यद्वर्णनामचिह्निता वा वर्तिश्चिरं ज्वलति, सा भूमिस्तस्य वर्णस्य शस्ता । सर्वासां ज्वलने सर्ववर्णानां योग्या । सर्वास्वनुज्ज्वलितासु सर्वैरपि त्याज्या भवतीति ।

चतुर्थी परीक्षा —

"अम्रोपितं न कुसुमं यस्य प्रम्लायतेऽनुवर्णसमम् ।
तत् तस्य भवति शुभदं यस्य च यस्मिन् मनो रमते ॥"

अस्याप्यभिप्रायस्त्वेवं — ब्राह्मणादिवर्णचतुष्टयस्य यथाक्रमं सितरक्तपीत-कृष्णवर्णचिह्नितमेकजातीयं कुसुमं रात्रौ खातस्यान्त प्रक्षिप्तं सद् द्वितीयेऽहनि यद्वर्णचिह्नितं कुसुमं न प्रम्लायते, तद्वर्णस्य सा भूमिः शुभेति । इह मुख्यं पक्षमाह — यस्मिन्नित्यादि । अन्यच्च —

"भूगर्ते जलपूरितेऽत्र निशिवद् द्रोणादिपुष्पं क्षिपेत्
प्रादक्षिण्यगतिः शुभं सुमनसां यद्यन्यथा निन्दितम् ।
पुष्पे दिक्ष्वथ संस्थिते सति शुभं कोणेषु चेन्निन्दितं
ज्ञात्वेत्यादिशुभाशुभान्यथ समीकुर्यात् क्षमां सूक्ष्मधीः ॥"

इति । पर्वतोपान्तेषु तु प्रथमं पर्वतानां स्थितिर्निर्णेतव्या । तत्र पर्वता अधोमुखाः शेरत इति शास्त्रकाराः । पूर्वपश्चिमायतेषु तेषु प्राची शिरोभागः, उत्तरदक्षिणायतेषु तु उत्तरा । तेषां वामपार्श्वममृतस्थानं, तत्र गृहादिकं निवेशनीयम् । दक्षिणपार्श्वं तु विषस्थानं, तत्र न किमपि मनुष्यगृहादिकं कर्तव्यमिति साम्प्रदायिकाः । एवं —

"प्राच्यां निषिद्धो हि गिरिस्तच्छाया ह्युदये रवेः ।
यत्रापतति तत्रापि ग्रामाद्यं न प्रशस्यते ॥"

"विष्णोः पृष्ठे च वामे नरभवनमनर्थप्रदं दक्षिणे वा-
प्यग्रे भागे च कालीनरहरिशिवतद्भिन्नसर्वोग्रमूर्तेः ।
आर्यो निम्नस्थलस्थो यदि मनुजगृहं दक्षिणेऽग्रेऽस्य तस्मा-
दुच्चत्वं नेष्टमिष्टं निकटमपि तदन्यत्र तत्साद्भाजाम् ॥
धीदिक्षेत्रादिदेवालयजलधिनदीतापसागारगोष्ठ-
ग्रामादीनामतीवान्तिकमपकुरुते नैकधा मन्दिरेषु ।
देवागारान्तराणामतिशुभदमिदं किञ्चिदूनं समं वा
तस्मादभ्युन्नतं च द्विजनिचितमिदं नेष्यते तन्मतीशे ॥"

ईदृशा नियमा ग्रन्थान्तराद् अवगन्तव्याः ॥ २६ — ३० ॥

अथ परीक्षणीयाया भूमेरासन्नक्षेत्रेरपि शुभाशुभत्वं विशदयति—

तदलाभे गत्यन्तराभावात् प्रायश्चित्तानुष्ठानपूर्वकं यत्नतस्तां निश्शल्यां कृत्वोपाददीतेति ॥ ३६—३८ ॥

सर्वलक्षणसम्पन्नाया भूमेर्लाभः सर्वत्र न सम्भवतीत्यतोऽन्ततो गत्वेदमपि या लक्षणमवश्यमेषितव्यमित्याभिप्रायेणाह—

अनूपरा स्निग्धवती प्रशस्ता च बहूदका ।
तृणोपलान्विता या सा मान्या वास्तुविधौ धरा ॥ ३९ ॥

अनूपरेत्यादि । वास्तुविधौ गृहनिवेशनविधौ । शेषं स्पष्टम् । तृणोपलेत्यस्य स्थाने 'तृणोपला च सामान्या तथा वास्तुविधौ धरा' इत्यपि क्वचित् पाठः ॥ ३९ ॥

इति वास्तुविद्यालघुविवृतौ वसुधालक्षणं नाम
द्वितीयोऽध्यायः ॥

---

## अथ वेदिमानादिकं नाम तृतीयोऽध्यायः ।

अथ वक्ष्यामि संक्षेपात् सर्वेषां वेदिविस्तरम् ।
वास्तोः स्थितिं च नामानि देवतानां स्थितिं तथा ॥ १ ॥

अथास्यां भूमौ धान्यवापगोनिवासनादिकं भूशुद्धिसाधकं कृत्यमर्थसिद्धमिति वा मनुष्यालये तावती शुद्धिर्नातिवादरणीयेति वा मत्वा तदुपदेशमतिलङ्घ्य वेदीमानं दिक्परिच्छेदं वास्तुदेवतापदविन्यासं चोपदेष्टुं तृतीयमध्यायमारभते— **अथ वक्ष्यामी**त्यादि । **वेदिविस्तर**मिति । वेदिरिह सम्यक्शोधनेन साधिता करिष्यमाणवास्तुयोगोपयोगिनी भूमिर्ग्राह्या' । 'वेदिः परिष्कृता भूमिः ' इत्यभिधानात् । तस्या विस्तरो विस्तारः, तमित्यर्थः । चतुरश्रक्षेत्रे हि आयामोऽपि विस्तारेण सम इति कृत्वात्र विस्तारमात्रमुक्तं वेदितव्यम् । इदं चोपरिष्टाद् ग्रन्थकार एव 'यदुक्तं वेदिविस्तार' इत्यत्र स्फुटीकरिष्यति । **वास्तोः स्थितिं** चेति । वास्तुदेवतापदविन्यासमिति

यावत्। चशब्देन दिक्परिच्छेदोऽपि ग्राह्यः। देवतानां स्थिति-मिति। विन्यस्तेषु पदेषु तत्तद्देवानां स्थानमित्यर्थः। एवं प्रकृताध्याये विषयप्रतिज्ञा कृता ॥ १ ॥

अथ प्रतिज्ञातक्रमेण भूविस्तारमाह—

पञ्चाशद्दण्डमानं वा त्रिंशद् वा कथितं बुधैः।
चत्वारिंशच्च वा कुर्यान्नृपाणां वेदिविस्तरम् ॥ २ ॥

द्वात्रिंशद् दण्डमानं वा त्रिंशद् वा तत् प्रकीर्तितम्।
त्रयस्त्रिंशदथ प्रोक्तो द्विजानां वेदिविस्तरः ॥ ३ ॥

एकोनविंशद्विंशच्च द्वाविंशद् दण्डमानकम्।
वैश्यानां वेदिविस्तारः कथितः शिल्पकोविदैः ॥ ४ ॥

पञ्चविंशच्च विंशद्वा दण्डमानमुदाहृतम्।
त्रिघ्नपञ्चकदण्डो वा शूद्राणां वेदिविस्तरः ॥ ५ ॥

उत्तमश्चाधमश्चापि मध्यमश्च यथाक्रमम्।
कथितो वेदिविस्तारो नृपादीनां पृथक् पृथक् ॥ ६ ॥

पञ्चाशदित्यादि। इह पञ्चाशत्, त्रिंशत्, चत्वारिंशदिति संख्याभेदप्रयुक्तानि उत्तमाधममध्यमानि वेदिमानान्युक्तानि। एवमुपर्यपि। दण्डमानमिति। दण्डप्रमाणं च 'मानुष्येषु चतुष्कर' इत्युक्तलक्षणम्। त्रिघ्नपञ्चकदण्डो वेति। त्रिघ्नं त्रिभिर्गुणितम्। पञ्चदशदण्डप्रमाण इति यावत्। विस्तारः पूर्वपश्चिमायामः, दैर्घ्यं दक्षिणोत्तरायाम इति साम्प्रदायिकाः। एवं वर्णानां भूमानं प्रकटितम्। केचित्तु क्षत्रियवैश्यशूद्राणां यथाक्रमं विस्ताराद् अष्टमांशेन षष्ठांशेन चतुर्थांशेन चाधिको वेद्यायामः कार्य इति च वदन्ति ॥ २—६ ॥

अथ शङ्कुस्थापनेन दिक्परिच्छेदं प्रस्तौति —

वक्ष्येऽहं दिक्परिच्छेदं शङ्कुनार्कोदये सति ।
उत्तरायणमासे तु शुक्लपक्षे शुभोदये* ॥ ७ ॥

वक्ष्येऽहमित्यादि । शुभोदय इति । उदयाधस्तमयपर्यन्तमातपस्य मेघाद्यैरप्रतिहतः प्रसरः यस्मिन् दिवसे भवति स शुभोदयः, शुभमुहूर्तश्च ॥ ७ ॥

---

* इत उपरि कचिन्मातृकायामधिकः पाठः —

"सर्वतः सुसमं कृत्वा स्थलं दर्पणसन्निभम् ।
तन्मध्ये दण्डमात्रं वा जलावस्थानतः समम् ॥
सच्छिद्रमध्यं तु घटं धाराम्बुपरिपूरितम् ।
यन्त्रिकाधारकं कृत्वा स्थलमध्ये समं न्यसेत् ॥
ततः परिस्रुताम्भोभिः समसिक्ते तु भूतले ।
अन्यूनाधिकसंस्थाना यथा ज्ञेयं तदम्भसा ॥
बिन्दुं कृत्वा स्थलमध्ये तस्मिन् शङ्कुं समं न्यसेत् ।

तद्यथा —

भ्रमविरचितवृ(त्ते ? त्त)स्तुल्यमूलाग्रभागो
द्विरददशनजन्मा सारदारूद्भवो वा ।
समऋजुरवलम्बादव्रणः पट्कवृत्तः
समतल इह शस्तः शङ्कुरर्काङ्गुलोच्चः ॥
शङ्कोः पुच्छाग्रयोर्मध्ये यवस्थूलायते समे ।
लोहजे घटयेत् सूच्यौ तच्छायामध्य( सिद्धये ) ॥
शङ्कुमानायतं सूत्रं बिन्दौ तस्मिन् निधाय तु ।
भ्रामयेत् परितस्तेन बिन्दौ स्थित्वा तु वर्तुलम् ॥
तन्मध्यबिन्दौ तं शङ्कुं स्थापयेदुदये रवेः ।
तद्बिम्बवृत्तरेखायां शङ्कुच्छायाशिरो यथा ॥
ह्रासाद् विशति पूर्वाह्णे तत्रच्छायाग्रमङ्कयेत् ।
तथापराह्णे छाया(यं ? यां) निर्गच्छन्त्यां तु मण्डलात् ॥

तोयसिद्धवसुधावलयान्त-
न्र्यस्तलम्बककृतार्जवशङ्कोः ।
यत्र भा विशति मुञ्चति वृत्तं
ते दिशौ वरुणवासवयोः स्तः ॥ ८ ॥

**तोयसिद्धेत्यादि** । अस्यायमभिप्रायः — गृहनिवेशनार्हां शल्योद्धरणादिभिः संशोधितां च भुवं जलसेकावघर्षणकुट्टनादिभिः सम्यक् समीकृत्य तत्र स्थापयिष्यमाण[1]शङ्कुमानायतं[2] तद्विगुणायतं वा सूत्रं परिभ्रमय्य समान्तरं किञ्चिद् वृत्तं विलिखेत् । ततस्तन्मध्यबिन्दौ केन्द्रस्थाने द्वादशाङ्गुलप्रमाणं कञ्चिच्छङ्कुं प्रभाते प्राङ्मुखो निखनेत् । अथवा पूर्वमेव शङ्कुं निखाय तदग्रबद्धेन सूत्रेणोक्तव्यासं वृत्तं लिख्यताम् । शङ्कुद्रव्यादिकमधिकृत्य गुरुदेव एवमाह—

"भ्रमविरचितवृत्तस्तुल्यमूलाग्रभागो
द्विरददशनजन्मा सारदारूद्भवो वा ।

---

संस्पृशन्त्यां तु तद्रेखां प्राग्वत् तत्रापि लाञ्छयेत् ।
तयोरा(स्था ? स्फा)लयेत् सूत्रमर्धरक्षोप्रमानतः ॥
प्रागङ्काद्दक्षिणे न्यस्य सा दिगैन्द्रीति कथ्यते ।
प्रागाङ्कादुत्तरे तद्वदेशी काष्ठा तु सा भवेत् ॥
शिवालयादिकरणेष्वैशी प्राचीति केचन ।
विप्राद्यावासकरणे स्यादैन्द्रीत्यपरे जगुः ॥
प्राची दिगेव सर्वेषां नैकतन्त्रनिदर्शनात् ।
निरक्षदेशे लङ्कादौ स्यादयं दिशि निर्णयः ॥
इत्याहुः केचिदित्यस्मात् साक्षदेशस्य कथ्यते ।
विशेषः साक्षदेशानामस्त्येवार्कोपसर्पणात् ॥
उक्तं चान्यैः । तोय"

---

१. "शङ्कुमानायतं सूत्र बिन्दौ तस्मिन् निधाय तु" इति गुरुदेवः ।
२. "शङ्कुदीर्घगुणगर्भितसूत्रेणाकलय्य परितस्य सुवृत्तम्" इति धर्मदत्तः ।

समगृजुरवलम्बाद्व्रणः पद्कवृत्तः
समतल इह शस्तः शङ्कुरर्काङ्गुलोच्चः ॥ ''

इति । चन्द्रिकायां तु—

''शङ्कुं करार्धायतम् ।

मूले ष्यङ्गुलविस्तृतं क्रमवशादग्रे तदर्धोन्मित-
व्यासं वृत्ततरं सरोजमुकुलाकाराग्रमाकल्पयेत् ॥''

इति तत्र विशेषोऽपि दृश्यते । अथ कृतलम्बकविधया तस्य ऋजुतामापाद्य छायागतिं पश्येत् । यस्मिन् प्रदेशे छायाया वृत्तान्तः प्रवेशनं भवति स प्रदेशः प्रतीची, यत्र वृत्ताद् बहिर्निर्गमनं स प्राचीति जानीयात् । अर्थात् पूर्वाह्णापराह्णयोर्वृत्तरेखायामङ्कितं परस्पराभिमुखं शङ्कुच्छायाग्रलग्नस्थान-द्वयमेव क्रमेण प्रतीच्याः प्राच्याश्च दिशोर्द्योतकं भवतीति । यत्र भा विशति मुञ्चति वृत्तमिति । अस्यायमभिप्रायः—पूर्वाह्णे प्रसृता शङ्कुच्छाया सूर्यगत्यनुसारेण क्रमशो ह्रासमुपगता वृत्तस्यान्तर्विशति । मध्याह्ने शङ्कुमूलमुपगतायास्तस्याः अपराह्णे पुनरन्यपार्श्वे वर्धनात् सा क्रमेण वृत्ताद् बहिर्गच्छतीति । निरक्षदेशे लङ्कादावयं विधिरुक्तः ॥ ८ ॥

साक्षदेशे तु नायं विधिरिति सूचयन् पूर्वोपक्षिप्तस्यासाधुत्वं समर्थ-यति—

याति भानुरपमण्डलवृत्त्या
दक्षिणोत्तरदिशोरनुवेलम् ।
तेन सा दिगनृजुः प्रतिभाति
स्यादृजुः पुनरपक्रममौर्व्या ॥ ९ ॥

यातीत्यादि । अस्यायमर्थः—भानुरुत्तरगोलस्थः उत्तरां दिश-मपक्रममण्डलेन गच्छति, दक्षिणगोलस्थः दक्षिणां दिशं तथा गच्छति । तस्मात् सा पूर्वोक्ता दिगनृजुः प्रतिभाति । तेनापक्रमज्यया पुनर्दिगार्जवं प्रतिपादनीयमिति । 'अपमण्डलवर्ती'ति पाठान्तरम् ॥ ९ ॥

तत्प्रकारमाह —

छायानिर्गमनप्रवेशसमयार्काक्रान्तिजीवान्तरं
क्षुण्णं स्वश्रवणेन लम्बकहृतं स्यादङ्गुलाद्यं फलम् ।
पश्चाद्बिन्दुमनेन स्वयनतः सञ्चालयेद् व्यत्ययात्
स्पष्टा प्राच्यपराथवायनवशात् प्राग्बिन्दुमुत्सारयेत् ॥ १० ॥

छायेत्यादि । अस्यार्थो गुरुदेवैनैवं विवृतः — यावतीभिर्वृत्ताभिर्घटिकाभिः वृत्तरेखां स्पृशति शङ्कुच्छाया, यावतीभिर्निर्गच्छति स खलु छायानिर्गमनप्रवेशसमयः । तयोः कालयोः अर्काक्रान्तिजीवान्तरं नाम अर्कघटिकामानमित्यर्थः । तत् स्वश्रवणेन प्रवेशनिर्गमनच्छायायाः कर्णेन क्षुण्णं गुणितं लम्बकहृतं लम्बज्यया हृतम् अङ्गुलाद्यं फलं भवति । अनेन फलेन पश्चाद्बिन्दुं प्राक्षाङ्गुलप्रमाणेन स्वयनतः व्यत्ययात् स्वेरयनस्य व्यत्यासात् सञ्चालयेत् । अयनव्यत्ययश्च उत्तरायणे दक्षिणेन, दक्षिणायने तूत्तरेण च भवति । तथा आस्फालितं सूत्रं साक्षदेशे स्पष्टा प्राची अपरा च भवति । अथवायनवशात् प्राग्बिन्दुमुत्सारयेदिति । 'स्पष्टा' इति क्वचित् पाठः । अत्र मयः — "शङ्कुद्विगुणमानेन तन्मध्ये मण्डलं लिखेदि"-त्याद्युपक्रम्य —

"उदगाद्यपरान्तानि पर्यन्तानि विनिक्षिपेत् ।
सूत्राणि स्थपतिः प्राज्ञः प्रागुत्तरमुखानि च ॥
कन्यायां वृषभे राशावपच्छायात्र नास्ति हि ।
मेषे च मिथुने सिंहे तुलायां द्व्यङ्गुलं नयेत् ॥
कुलीरे वृश्चिके मत्स्ये शोधयेच्चतुरङ्गुलम् ।
धनुःकुम्भे षडङ्गुल्यं मकरेऽष्टाङ्गुलं तथा ॥
छायाया दक्षिणे वामे नीत्वा सूत्रं प्रसारयेत् । "

इत्याह । अर्कावलम्बकैर्विनापि दिक्परिज्ञानोपायमाह चान्द्रिकाकारः । यथा —

"शङ्कुदीर्घयुगसम्मितसूत्रेणाकलय्य परिवृत्य सुवृत्तम् ।
वृत्तमध्यमवधार्य सुसूक्ष्मं शङ्कुमत्र [illegible] दृढं निवेशयेत् ॥

शङ्कुच्छायाग्रभागे त्ववहितहृदयो वृत्तगेऽङ्कयित्वा
प्राह्णान्ते पश्चिमायां दिशि तदितरदिश्येवमेवापराह्णे ।
पाश्चात्येऽन्येद्युरप्यङ्कनमपि च विधायाङ्कयोरेतयोर-
प्यन्तर्भागत्रिभागे नयतु गतादिनाङ्कं तदेवेह सूक्ष्मम् ॥

पूर्वापरेद्युःप्रभवाङ्कयुग्ममेवं सुसूक्ष्मं परिकल्पितं यत् ।
तदङ्कयुग्माद्वितसूत्रमेव पूर्वापराशाप्रभवं सुसूक्ष्मम् ॥

एवं क्षेत्रस्य मध्ये सुविहितमिह यद् ब्रह्मसूत्रं तदाहु-
स्तन्मध्येऽन्योन्यमन्तर्गतमथ रचयेद् वृत्तयुग्मं च धीमान् ।
तद्योगात् तिर्यगुद्यज्झषजठरसुषुम्नाध्वना सूत्रमेकं
याम्योदग्गामि सूक्ष्मं रचयतु यमसूत्रं तदित्यामनन्ति ॥

तत्सूत्रद्वितयेऽथ दिक्षु चतसृष्वङ्कान् समं कल्पयि-
त्वाङ्कारोपितमध्यकानि सुसमं चत्वारि वृत्तानि च ।
सिध्यन्त्यत्र विदिक्षु वृत्तयुगलीयोगेन मत्स्याः शिवा-
न्यग्रास्तद्गतसूत्रयुग्ममपि चाशाऽध्यश्रमाकल्पयेत् ॥"

इति । अस्य सङ्ग्रहः—चतुर्विंशत्यङ्गुलप्रमितेन सूत्रेण वृत्तमेकं विलिख्य तन्मध्यकेन्द्रे द्वादशाङ्गुलप्रमाणं शङ्कुमायसमन्यं वा सुदृढं निखनेत् । पूर्वाह्णे तस्य छायाग्रं तद्वृत्ते यत्र स्पृशति तत्र, अपराह्णे तदितरभागे यत्र स्पृशति तत्र चाङ्कनीयम् । तथापरेद्युरपि पूर्वाह्णे छायाग्रयोगस्थानं वृत्तेऽङ्कयेत् । अथ पूर्वोत्तरादिनपूर्वाह्णकृताङ्कयोर्यदन्तरालमानं, तस्य त्र्यंशं पूर्वदिनपूर्वाह्ण-कृताङ्कस्थानात् द्वितीयाङ्कपार्श्वे नीत्वा ततः सूत्रमेकं तदितरभागस्थाङ्क-स्थानं नयेत् । एवं कृते तत् सूत्रं यतो नीतं सा प्रतीची, यत्र नीतं सा प्राचीति सिध्यति । अथ ब्रह्मसूत्राख्यस्यास्य मध्ये तद्बिन्दुद्वयमेव मध्य-केन्द्रं कृत्वा वृत्तद्वयं तथा कल्प्यं यथा वा ते अन्योन्यमन्तर्गते भूत्वा मत्स्याकारसंस्थानविशेषमुत्पादयेताम् । ततस्तन्मत्स्योदरमध्यवर्त्मना सूत्र-मेकं तिर्यगास्फालयेत् । एतत्तु यमसूत्रं दक्षिणोत्तरदिगायतं भवतीत्यतो दक्षिणामुत्तरां च दिशं सुसूक्ष्मं साधयेत् । अथ सूत्रयोरेतयोश्चतसृष्वपि दिक्षु एकैकमङ्कं समान्तरं विन्यस्य तं तं मध्यं कृत्वा चत्वारि वृत्तानि

पूर्ववद् अन्योन्यसंश्लिष्टानि कारयेत् । अथ तदुत्पादितकोणमत्स्यसौषुम्नरेखाभ्यां यथाभिमुखं प्रसारिताभ्यां विदिशोऽपि सिध्यन्तीति । अथवा शङ्कुच्छायाप्रयोगसम्पादितं बिन्दुद्वयं मध्यं कृत्वा वृत्तद्वयं पूर्ववत् प्रकल्प्य तदुत्पादितमत्स्यसौषुम्नरेखया पूर्वं यमधनेशाशे संसाध्येताम् । तदनन्तरं तद्रेखायां यमसूत्राख्यायां शङ्कुस्थानात् समान्तरयोरुभयोरग्रयोः समान्तरं बिन्दुद्वयं कल्प्यम् । अथ तावपि बिन्दू पृथङ् मध्यत्वेन प्रकल्प्यैकैकं वृत्तं पूर्ववद् विलिखेत् । तदुत्पादितमत्स्यसौषुम्नरेखया ब्रह्मसूत्राख्यया सुसूक्ष्मे पूर्वापराशे साधयेत् । एषु चतुर्षु वृत्तेषु कोणमत्स्यसौषुम्नरेखाभ्यां विदिशोऽपि सिध्यन्तीति । एषां विन्यासः —

अथ महानसादिस्थाननिर्णयोपयुक्तस्य वास्तुदेवतापदविन्यासस्य प्रकल्पनाय प्रथमं चतुरश्रक्लृप्तिमाह —

यदुक्तं वेदिविस्तार आयामश्चापि तत्समः ।
एवं कृत्वा च तुर्यश्रं तत्र सूत्राणि पातयेत् ॥ ११ ॥

यदुक्तमित्यादि । एवं कृत्वा च तुर्यश्रमिति । तुर्यश्रक्षेत्रकल्पनमधिकृत्यैवमाह समुच्चयकारः—

"प्रागग्रे सूत्रमुर्व्यामृजुतरमभिकल्प्यास्य मूलाग्रगाभ्यां
सूत्राभ्यां मत्स्ययुग्मं यमशशिहरितोः कल्पयित्वात्र सूत्रम् ।
कृत्वा दिक्ष्वङ्कयित्वा सममिह विहितैः सूत्रकैः कोणमत्स्यान्
कृत्वास्फाल्यैषु सूत्रं रचयतु चतुरश्रं पुरः क्षेत्रक्लृप्तौ ॥"

इति । तत्र सूत्राणि पातयेदिति । सूत्रपातश्चायमेकाशीतिपदवास्तुस्वरूपप्रकाशनायेति समनन्तरमेव स्फुटीभविष्यति । सूत्रपातप्रकारश्चेत्थं — चतुरश्रक्षेत्रे प्रागानना उत्तराननाश्च रेखा दश दश समान्तरा लेखनीयाः । तासां नामानि तु षष्ठाध्याये ग्रन्थकार एव वक्ष्यति । आभिर्विंशत्या रेखाभिः तत्क्षेत्रमेकाशीतिकोष्ठकं सम्पद्यते ॥ ११ ॥

एतदेवाह —

एकाशीतिपदं कृत्वा वास्तुतत्त्वविभागवित् ।
देवतानां यथास्थानं स्थापयेदत्र भागशः ॥ १२ ॥

एकाशीतिपदमित्यादि । इदमत्रावधेयं — गृहादीनां हि वास्तुपदानि द्वात्रिंशत् । एकैकस्यापि वास्तुपदस्यैकैकं नाम वास्तुशास्त्रे प्रसिद्धम् । तथाहि — प्रथममेकपदं सकलमिति शब्दितम् । द्वितीयं चतुष्पदं पेचकसंज्ञम् । तृतीयं नवपदं पीठाख्यम् । चतुर्थं षोडशपदं महापीठनाम्ना प्रसिद्धम् । एवमन्ये च वास्तुपदभेदास्तत्तन्नाम्नाभिधीयन्ते । तेषु —

"वर्णिनां भवनादीनि निवेशा राजवेश्मनाम् ।
एकाशीतिपदेनेन्द्रस्थानं च विभजेत् सुधीः ॥"

इत्यभियुक्तोक्त्यनुसारेण प्रकृतग्रन्थकारः एकाशीतिपदं परमशायिसंज्ञं वास्तुपदमेवेह प्रदर्शयितुमारब्धवानिति ॥ १२ ॥

'स्थापयेदत्र भागशः' इति पूर्वश्लोके प्रस्तुतं स्थापनप्रकारमेवाह 'मध्य' इत्यादिभिश्चतुर्दशभिः श्लोकैः ।

मध्ये नवपदस्थं च ब्रह्माणं देवतां वदेत् ।
ततो दिक्षु च चत्वारि षट्पदानि प्रकल्पयेत् ॥ १३ ॥
तत्राष्टौ द्विपदान्याहुर्वास्तुविद्याविशारदाः ।
एतान्यभ्यन्तरस्थानि दैवतानि त्रयोदश ॥ १४ ॥
प्रोक्तानि च बहिष्ठानि द्वात्रिंशद् वास्तुचिन्तकैः ।
एतेषामपि नामानि दैवतानां वदामि च ॥ १५ ॥
पर्जन्योऽथ जयन्तश्च महेन्द्रादित्यनामकौ ।
सत्यो भृशोऽन्तरिक्षश्च तत्राग्निश्च तथाष्टमः ॥ १६ ॥
पूषा च वितथश्चैव गृहक्षतयमौ तथा ।
गन्धर्वो भृङ्गराजश्च मृगो निर्ऋतिरष्टमः ॥ १७ ॥
दौवारिकश्च सुग्रीवः पुष्पदन्तश्च वारुणः ।
असुरः शोषणो रोगो वायुश्चैव तथाष्टमः ॥ १८ ॥

नागो मुख्यश्च भल्लाटः सोमश्चैवार्गलस्तथा ।
अदितिश्चोदितीशानावुत्तरस्यां दिशि स्थिताः ॥ १९ ॥
एतान्येकपदस्थानि पर्जन्याद्याः प्रदक्षिणात् ।
द्वात्रिंशद् देवता ज्ञेया एताः प्राकारदेवताः ॥ २० ॥
ब्रह्मभास्करमध्यस्थमार्यकं नाम दैवतम् ।
कृतान्तब्रह्मणोर्मध्ये विवस्वानिति च स्मृतः ॥ २१ ॥
वरुणब्रह्मणोर्मध्ये मित्रकं नाम दैवतम् ।
ब्रह्मसोमान्तरस्थाने महीधर इति स्मृतः ॥ २२ ॥
आपश्चैवापवत्सश्च द्विपदस्थौ यथाक्रमम् ।
ब्रह्मेशानान्तरे कुर्याद् दैवतं वास्तुकर्मकृत् ॥ २३ ॥
हुताशब्रह्मणोर्मध्ये स्थाप्यं नामाधिदैवतम् ।
सविता चैव सावित्रो द्विपदद्वयसंस्थितौ ॥ २४ ॥
निर्ऋतिब्रह्मणोर्मध्ये त्विन्द्रश्चेन्द्रजयस्तथा ।
द्विपदद्वयसंस्थानौ ब्रुवते वास्तुवेदिनः ॥ २५ ॥
ब्रह्मवाय्वोश्च मध्यस्थे देवते कीर्तिते इति ।
रुद्रो रुद्रजयश्चैव वहिष्कोणेषु कीर्तितौ ॥ २६ ॥

इहोक्तानां केषाञ्चिद् देवानां नाम ग्रन्थान्तरेऽन्यथा पठ्यते । यथा—इहोक्त 'गृहक्षतः' ग्रन्थान्तरे 'बृहत्क्षत' इति गण्यते । तथा अदितिः 'दितिरि'ति, अर्गलः 'भुजग' इति च व्यपदिश्यते । एवमन्येऽप्येवंजातीया नामभेदाः सन्ति । ते तत एवावगन्तव्याः । वास्तुयागप्रसङ्गे कोष्ठाद् बहिरपि पदभोगवर्जितान् शर्वस्कन्दादीनष्टौ देवान् ग्रन्थकारश्चतुर्थाध्याये वक्ष्यति । ततस्तेऽप्यत्र ग्राह्याः । अथैषां सर्वेषां मुखद्वारविन्यासः प्रदर्श्यते—

यद्यपीह 'आपश्चैवापवत्स' इति क्रमानुरोधेन 'सविता चैव सावित्र' इत्युक्तत्वादग्निकोणे ब्रह्मणः समनन्तरः सावित्रो भवितुमर्हति, तथाप्युपरि 'सावित्रः सविते'ति परिगणनात् . वराहमिहिरेण वक्ष्यमाणरीत्या स्पष्टमभिहितत्वाच्च ब्रह्मसमनन्तरः सविता कोष्ठे निवेशितः । इदमत्र वराहमिहिरवचनम् —

"मध्ये ब्रह्मा नवकोष्ठकाधिपोऽस्यार्यमा स्थितः प्राग्भाग् ।
एकान्तरात् प्रदक्षिणमस्मात् सविता विवस्वांश्च ॥

विबुधाधिपतिस्तस्मान्मित्रोऽन्यो राजयक्ष्मा च ।
पृथ्वीधरापवत्सावित्येते ब्रह्मणः परिधौ ॥

आपो नामैशाने कोणे हौताशने च सावित्रः ।
जय इति च नैर्ऋते रुद्र आनिलेऽभ्यन्तरपदेषु ॥"

इत्यादि । इह 'आर्यक'स्थाने 'अर्यमा' इति, 'रुद्र'स्थाने 'राजयक्ष्मा' इति, 'रुद्रजय'स्थाने 'रुद्र' इति च तेन देवतानामानि पठितानि । जय एव इन्द्रजयः । अयं तु देवानां पदभोगः मयाद्यनुसृतः । तत्र मयः —

"परमशायिपदे नवभागभाक् कमलजो मुखतस्तु चतुस्सुराः ।
रसपदा द्विपदा हि विदिक्स्थिता बहिरथैकपदाः सकलामराः ॥"

इति । इह ग्रन्थकाराणामभिप्राया बहुधा दृश्यन्ते । दिङ्मात्रं तूदाह्रियते । तत्र वराहमिहिर एवमाह —

"आपस्तथापवत्सः पर्जन्योऽग्निर्दितिश्च वर्गोऽयम् ।
एवं कोणे कोणे पदिकाः स्युः पञ्च पञ्च सुराः ॥

बाह्या द्विपदाः शेषास्ते विबुधा विंशतिः समाख्याताः ।
शेषाश्चत्वारोऽन्ये त्रिपदा दिक्ष्वर्यमाद्यास्ते ॥"

इति । एतत्पक्षे देवानां स्थितिरेवम् —

प्राची

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| अग्निः | पर्जन्य | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्तरिक्ष· | अनिलः |
| दितिः | आप | | | | | | सावित्रः | पूषा |
| अदिति. | | आपवत्सः | अर्यमा | | | सविता | | वितथः |
| भुजगः | | पृथ्वीधरः | ब्रह्मा | | | विवस्वान् | | गृहक्षतः |
| सोमः | | | | | | | | यमः |
| भल्लाटः | | | | | | | | गन्धर्वः |
| मुख्यः | | राजयक्ष्मा | मित्रः | | | इन्द्रः | | भृङ्गराजः |
| नागः | रुद्रः | | | | | | जयः | मृगः |
| रोग. | पापयक्ष्मा | शोष | असुरः | वरुणः | पुष्पदन्तः | सुग्रीव. | दौवारिकः | पिता |

इति । अन्यत् समानम् । तृतीयोऽपि प्रकारो ग्रन्थान्तरेऽभिहितः —

"चतुरश्रीकृते क्षेत्रे विभक्ते नवधा ततः ।
मध्ये महाद्युतिर्ब्रह्मा विधेयो नवभिः पदैः ॥
तस्मादनन्तरं प्राच्यां षट्पदः कीर्तितोऽर्यमा ।
आग्नेयकोणे सवितृसावित्रौ पदिकावुभौ ॥
ब्रह्मणोऽनन्तरे याम्ये विवस्वान् षट्पदाश्रितः ।
नैर्ऋते पदिकौ कोणे जयेन्द्रौ कथितावुभौ ॥
षट्पदः स्यात् ततो मित्रः काष्ठायां पत्युरम्भसः ।
कोणेऽपरोत्तरे यक्ष्मा रुद्रश्च पदिकावुभौ ॥
षड्भिः पदैस्ततः सौम्ये निश्चलः पृथिवीधरः ।
आपस्तथापवत्सश्च पदिकावीशदिग्गतौ ॥

इत्यन्तःसंश्रया देवाः प्रोक्ता ब्रूमो बहिःस्थितान् ।

इत्यादिना, .... .... .... .... .... ....

पदभोगमथो ब्रूमो बहिःस्थानां नभस्सदाम् ॥
तत्राष्टौ द्विपदाधीशा जयन्तो भृश एव च ।
वितथो भृङ्गसुग्रीवशोषमुख्यास्तथादितिः ॥
एभिः शेषा बहिर्ये तु ते स्युः पदभुजः सुराः ।
एकाशीतिपदे प्रोक्तो देवतानामयं क्रमः ॥"

इत्यन्तेन । अस्याप्येवं कोष्ठविन्यासः —

प्राची

| ईशः | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | आन्त-रिक्षः | अग्निः |
|---|---|---|---|---|---|---|---|---|
| दितिः | आपः | | | | | | सावित्रः | पूषा |
| अदितिः | | आप-वत्स. | | अर्यमा | | सविता | | वितथः |
| भुजग | | | | | | | | गृहक्षतः |
| सोमः | | पृथिवी-धरः | | ब्रह्मा | | विव स्वान् | | यमः |
| भल्लाटः | | | | | | | | गन्धर्व· |
| मुख्यः | | यक्ष्मा | | मित्र | | इन्द्रः | | भृङ्गराज |
| नागः | रुद्रः | | | | | | जय. | मृगः |
| वायु· | पापय-क्ष्मा | शोषः | असुरः | वरुण | पुष्प-दन्त· | सुग्रीवः | दौवा-रिकः | निर्ऋति |

इति । इह पूर्वादिषु दिक्षु यथाक्रममिन्द्रादित्रिकं, गृहक्षतादित्रिकं, पुष्पदन्तादित्रिकं, भल्लाटादित्रिकं चैकैकपदस्थमिति हेतोः प्रदर्शितवराहमिहिरमताद् जयन्तभृशाद्यादित्यन्ता अष्टौ देवा द्विपदभोगिन इत्यतः प्रकृतग्रन्थकारमताच्चायं विभिन्न इति स्पष्टमवगम्यते । एवंजातीया मतभेदाः तत्तद्ग्रन्थेभ्योऽवगन्तव्याः ॥ १३–२६ ॥

इति वास्तुविद्याव्याख्यावृतौ वेदिमानादिकपरिच्छेदवास्तुदेवतान्यासनं नाम तृतीयोऽध्यायः ।

---

## अथ द्वारस्थाननिर्णयादिकं नाम चतुर्थोऽध्यायः ।

अथैतेषु वास्तुकोष्ठेषु द्वारादीनां निवेशस्थानं दर्शयितुमुपक्रमते—

अथ द्वे प्राङ्मुखे द्वारे कुर्याद् द्वे दक्षिणामुखे ।
द्वारे प्रत्यङ्मुखे द्वे च द्वे च कुर्यादुदङ्मुखे ॥ १ ॥

अथ द्वे इत्यादि । अनेन विशिष्टवाक्येन सामान्यतः प्रतिदिशं द्वे द्वे अन्तर्द्वारे शुभे इत्युक्तं भवति ॥ १ ॥

तत्र विप्रस्य द्वारस्थानमाह—

माहेन्द्रे प्राङ्मुखं द्वारं प्रशस्तं शिष्टजातिषु ।
अपरं तु तथा द्वारं जयन्ते प्राह निश्चयात् ॥ २ ॥

माहेन्द्र इत्यादि । शिष्टजातिषु ब्राह्मणेषु विषये । माहेन्द्रे महेन्द्रपदे ॥ २ ॥

क्षत्रियवैश्ययोर्द्वारस्थानमाह—

गृहक्षते तथा द्वारं क्षत्रियाणामभीष्टदम् ।
गन्धर्वे निहितं द्वारं वैश्यानां तदभीष्टदम् ॥ ३ ॥

गृहक्षत इत्यादि ॥ ३ ॥

पुष्पदन्ते तु यद् द्वारं शूद्राणां तदभीष्टदम् ।
सुग्रीवे चापरं द्वारं भल्लाटे सार्ववर्णिकम् ॥ ४ ॥
मुख्ये च नियतं द्वारं भल्लाटादपरं स्मृतम् ।

शूद्राणां तदाह—पुष्पदन्त इत्यादि । सर्ववर्णसाधारणं द्वारस्थानमाह—भल्लाटे सार्ववर्णिकमित्यादि । सर्वमेतद् महाद्वारमाधिकृत्योक्तं मन्तव्यम् ॥ ४, ४३ ॥

अथ यथाक्रमं तत्तद्देवतास्थानेषु निवेशितानां द्वाराणां फलमाह—

अथ द्वारफलं वक्ष्ये प्रोक्तं वास्तुविदां वरैः ॥ ५ ॥

आदित्ये स्थापिते द्वारे पुत्रनाशोऽथ जायते ।
मित्रभङ्गस्तु सत्ये स्याद् भृशे पत्या वियुज्यते ॥ ६ ॥

अन्तरिक्षे कृते द्वारे विनाशमपि गच्छति ।
पावके स्थापिते द्वारे म्रियते वेश्मनः पतिः ॥ ७ ॥

तत्र पूष्णि कृते द्वारे नश्येद् दारुणशोषणैः ।
वितथे स्थापिते द्वारे पत्युर्मरणमादिशेत् ॥ ८ ॥

गृहक्षतपदे द्वारे कृते सम्पद्विवर्धनम् ।
यमे द्वारे कृते सर्वनाशं च मरणं वदेत् ॥ ९ ॥

गन्धर्वे निर्मिते द्वारे सर्वकर्मविवर्धनम् ।
भृङ्गराजे विपद् द्वारे मृगे सस्यविनाशनम् ॥ १० ॥

निर्ऋतौ मरणं विद्याद् दौवारिकपदे लयम् ।
सुग्रीवे सर्वलाभः स्यात् पुष्पदन्ते भवेद् गुणः ॥ ११ ॥

वारुणे स्थापिते द्वारेऽमित्राद्वा चोरतो भयम् ।
असुरे स्थापिते द्वारे नित्यमायासकारणम् ॥ १२ ॥

शोषणे स्थापिते द्वारे शुष्यते न विनश्यति ।
रोगे यदि कृते द्वारे पाण्डुरोगी भवेन्नरः ॥ १३ ॥

वातस्थाने कृते द्वारे नरो वातेन पीड्यते ।
नागे च निर्मिते द्वारे शीघ्रं नागभयं भवेत् ॥ १४ ॥

मुख्ये यदि कृतं द्वारं सद्यो ब्राह्मण्यमाप्नुयात्।
भल्लाटे च कृते द्वारे वैशिष्ट्यं लभते नरः ॥ १५ ॥

सोमे चैव कृते द्वारे यज्ञशीलो भविष्यति।
अर्गले च कृते द्वारे जलेन म्रियते नरः ॥ १६ ॥

अदितौ च कृते द्वारे कुक्षिरोगं विनिर्दिशेत्।
उदितौ च कृते द्वारे वनिताकुलनाशनम् ॥ १७ ॥

रुद्रे यदि कृतं द्वारं वह्निना दह्यते गृहम्।
पर्जन्ये च धनं नश्येत् जयन्ते जयमाप्नुयात् ॥ १८ ॥

माहात्म्यं चैव माहेन्द्रे यदि द्वारं कृतं भवेत्।
अन्तर्द्वाराणि चोक्तानि बहिर्द्वारमथोच्यते* ॥ १९ ॥

अथेत्यादि निगदव्याख्यातम् ॥ १-१९ ॥

---

* इत उपरि क्वचिद् ग्रन्थेऽधिकः पाठः—

"यदि स्थलोन्नते द्वारं यतो निम्नं ततो गृहम्।
स्थले चाप्यष्टमे राशौ द्वारमात्रं न कारयेत् ॥
माहेन्द्रे गृह(रक्षे ? क्षते) च फल्लाटे पुष्पदन्तके।
महाद्वाराणि चैव स्युरुपद्वाराणि सन्ति चेत् ॥
भृशे पूषणि भृङ्गास्ये दौवारे शोषनागयोः।
दितावपि च पर्जन्ये जलमार्गस्तथेन्द्रतः ॥
ईशार्गलान्तं शस्ताः स्यु प्रागुदीचीप्लवो यथा।
सूर्ये सूर्यो भृशे विष्णुरग्नौ काली यमे गुहः ॥
विष्णोर्मध्ये च वरुणे सुग्री(व ? वे) सुगतालयम्।
भृङ्गे जिनस्य ज्येष्ठाया वायौ चण्ड्यास्तु मुख्यके ॥
कुबेरस्य महाकाल्या मातृणां च निशाकरे।
अदितौ वास्तु चामुण्ड्याः शम्भ ऐशे शिवालयः ॥

निर्ऋतौ वा जयन्ते वा विप्रेशस्य गृहं भवेत् ।
अथवा देवतानां तु विन्यासमपरे जगुः ॥

तद्ग्रामपुरराष्ट्राणां स्यान्मध्ये ब्रह्मणो गृहम् ।
प्राच्यां वा पश्चिमे विष्णोर्ग्रामादीनां च सम्मुखम् ॥

पराङ्मुखं स्यादैशान्यं मानुषं शिवमन्दिरम् ।
स्वयम्भूर्दैविकं चार्षं यत्र तत्र स्थितं तु वा ॥

न दोषाय भवेत् तस्याप्यग्र्यं वर्ज्यं शुभार्थिभिः ।
प्राच्यामैशेऽथवा मध्ये गौर्याः सूर्योऽपि च श्रियः ॥

मातॄणां दक्षिणे धाम शास्तुः काल्याश्च नैर्ऋते ।
षण्मुखस्य तु वारुण्यां ज्येष्ठा(य? याः) तदनन्तरम् ॥

वायौ सौम्ये च दुर्गाया लोकेशानां स्वगोचरे ।
इन्द्रेशसोममध्ये वा क्षेत्रपालनिकेतनम् ॥

देशग्रामपुरादीनामेवमृद्धिकरं भवेत् ।
गोशा(ल? ला) दक्षिणे प्राच्यां वापी स्वैशे तथोत्तरे ॥

सर्वत्र वा जलं शस्तमुत्तरे पुष्पवाटिका ।
दक्षिणे गणिकावाटः परितः शूद्रजन्मनाम् ॥

वैश्यानां वणिजां प्राच्यां मध्ये राजपणो भवेत् ।
प्रागुदीच्योः कुलालानां नाविकानां च तत्र हि ॥

जालिकानां च वायव्ये सूनानां पश्चिमे गृहम् ।
तैलविक्रयिणां सौम्ये तक्ष्णां वाप्यनिलेऽनले ॥

वायव्ये कारुकादीनां कुविन्दानां तु पश्चिमे ।
क्रोशद्वये वा क्रोशे वा बहिश्चण्डालपक्कणम् ॥

प्रागुत्तरेण तु क्रोशाद् बहिः पितृवनं भवेत् ।
अनुक्ताना(श्च? म)थान्येषां युक्त्या वासं प्रकल्पयेत् ॥

राजधान्यां नृपावासो ब्रह्मांशादपरांशके ।
तस्य प्राच्या तु वाद्यालिरिन्द्रकोशसमान्वितः ॥

पाकशालान्तरिक्षेऽग्नौ शयनं गृहरक्षके ।
अस्त्रशाला च निर्ऋतौ वरुणे भोजनालयः ॥

विहारशाला वायौ स्यात् फल्लाटे कोशसञ्चयः ।
गोष्ठागारं तथा सौम्ये वा याम्येऽप्यर्गले स्मृतम् ॥

पर्जन्ये स्नानभवनमैशे होमार्चनागृहे ।
नृत्तशाला(सु ? तु) गन्धर्वे गजशाला तु पूषणि ॥

दित्यदित्योस्तुरङ्गाणां स्त्रीणां सौम्ये च पश्चिमे ।
मध्ये प्रपामण्डपं वा युक्त्यान्यच्चापि कारयेत् ॥

ब्राह्मणक्षत्रियविशां शूद्राणां धनिनामपि ।
वक्ष्यमाणास्तु ये जातिप्रासादाः संपदां पदम् ॥

अशक्तानां तु शस्ताः स्युस्तच्चतुष्का विनिर्मिताः ।

इतीशानगुरुदेवपद्धतौ ।

माहेन्द्रे सलिलाधिराजि च तटाकं कूपमैशानके
पर्जन्ये पचनालयं शिखिनि वा भुक्त्यालयं तत्पुरः ।
कर्तव्यं (क ? ख)लसद्म नैर्ऋतपदे कुर्वीत धान्यालयं
गोशालाम्बुपतौ द्वयावपि समीरे धाम चौलूखलम् ॥

अथ राजगृहे तेषां विशेषमाह—

मध्ये ब्रह्मगृहं नृपास्थितिगृहं मित्रे विहारोऽनिले
व्यायामोऽर्गलके धनं धनपतौ स्नानादि पर्जन्यके ।
ईशे(य)थथ भुक्तिसद्म वरुणे नृत्तादि गान्धर्वके
शालाथं निर्ऋतौ गृहक्षतपदे शय्यागृहं भूभुजाम् ॥

दण्डात् प्राङ्गणमध्यतोऽब्धिशरपट्सप्तादिसङ्ख्यानतौ-
स्त्यादध्यादथ पौष्पदन्तिकपदे द्वारं प्रचारोचितम् ।
फल्लाटे च गृहक्षतेष्वपि महाद्वाराण्युपद्वारका-
ण्यष्टाशान्तमृशादिकेषु परितः पर्जन्यनिष्ठेष्वपि ॥

इति पद्याशिकायाम् ।

दक्षिणोत्तरगात् सूत्रात् तेन पश्चिमतो भवेत् ।
षत्यष्टङ्गुलमानान्ते ब्रह्मवाप्यन्तरालगे ॥

सल्लरीगृहचापस्थस्तम्भस्थानं विनिश्चितम् ।
ईशखण्डं चतुर्धापि संविभज्य ततोऽपि च ॥

ऐशखण्डं प्रकुर्वीत राशिचक्रं विचक्षणः ।
तत्र कौर्प्यां कुलीरे च कूपनिर्माणमुत्तमम् ॥

नक्रराशौ वृषे चैव केचित् कुर्वन्ति पण्डिताः ।
वास्तौ वृषभकर्क्योस्तु कुर्वीत पशुमन्दिरम् ॥

यमसूत्राद् दण्डमात्राद् दूरे पश्चिमतो भुवि ।
यमवाप्यन्तराले च कुर्वीतोलूखलालयम् ॥

पश्चिमायतचापस्थस्तम्भात् पूर्वापरायतम् ।
वर्जयेत् सूत्रमनु तत् कुर्वीतोभयभागतः ॥

वर्जयेत् कूपवादं च पुनरन्यां च तादृशात् ।
अजकार्कितुलानक्रराशिषु द्वारमिष्यते ॥

पूर्वापरायते सूत्रे दक्षिणोत्तरगेऽपि वा ।
विभज्य नवधा वास्तु पञ्च भागांस्तु दक्षिणे ॥

त्रिभागान् वामके मुक्त्वा शेषे द्वारं विधीयते ।

इति ग्रन्थान्तरे ।

कर्किकन्यातुलाचापवृश्चिका नक्रमीनकौ ।
यदि स्थानं भवेदत्र शोभनं जलमुच्यते ॥

इति कूपप्रश्ने ।

कूपं कुम्भगतं श्रेष्ठं मध्यमं मीनमेषयोः ।
अधमं मकरस्थं हि कूपान्येवं विदुर्बुधाः ॥

बहिः सद्वारमाश्रित्य कूपद्वयमथाधमम् ।
+ + + + + + + + + तत् कूपद्वयमुच्यते ॥

कूपद्वयमथान्यच्च प्राकाराद् बहिरुच्यते ।
मेषस्थमिति यं प्राहुर्मीने वारि गुरु (स्नि ? स्थ)तम् ॥

कुम्भे मीनगते कूपे लघु वारि च शोभने ।
मनोदुःखहरे चैव पुत्रपौत्रविवर्धने ॥

वायस्थे च तथा कूपे गुणदोषविवर्जिते ।
विषभागे विषं विद्यादमृतेऽमृतमुच्यते ॥

वंशे वंशक्षयं विद्यात् स्तम्भस्थे वर्णसङ्करम् ।
क(र्मा?र्ण)सूत्रे मृतिं क(र्मा?र्ण)बहिःसूत्रेषु विस्मृतिः ॥

चोरशत्रुगृहोत्पाता गृहसूत्रे विदुर्बुधाः ।
प्राकारस्य बहिःसूत्रे तद्वाह्ये शूद्रगोचरे ॥

पुनः कोणचतुष्केषु चत्वार्यथ गृहाण्यपि ।
चतुरश्राणि तान्याहुर्विनियोगं ब्रवीमि ते ॥

भक्ष्यभोजनपानानि कारयेन्मीनगोचरे ।
गवां स्थितिस्तथा युग्मे महिषाणा तु दानवे ॥

धान्यानि तत्र नीयन्ते (प्र?प्रा)सादं वापि कारयेत् ।
वायव्ये तण्डुलस्यापि मुसलोलूखलस्थितिः ॥

यदि सङ्कोचयेत् कर्ता प्रयोजनगतेच्छया ।
एकैकगृहसंस्थानं चतुरश्रद्वयं विदुः ॥

चतुरश्रचतुष्कस्य मध्ये मण्डपमुच्यते ।
यदि सङ्कोचयेद् भर्ता प्रयोजनगतेच्छया ॥

भक्ष्यभोजनपानानि गृहे पूर्वं तदा भवेत् ।
दक्षिणे धनधान्यादि शयनं च विधीयते ॥

अथवा तत्र कर्तव्या ग(वा?वां) स्थितिरिति स्मृता ।
पश्चिमे धनधान्यादि शयनं च विनोदकम् ॥

अथवा तत्र धान्यानि नीयन्ते प्राह शङ्करः ।
उत्तरे गृहसंस्थाने विनोदनमुदाहृतम् ॥

मुसलोलूखलौ तत्र प्राह वाचस्पतिस्तथा ।
अथवा प्राङ्गणं मध्ये ब्रह्मणा समुदीरितम् ॥

इति सर्वदेवानां मते ।

अथ बहिर्द्वारनिवेशनस्थानं प्रदर्शयति —

**यत्रोन्नतं ततो द्वारं यत्र निम्नं ततो गृहम्।**
**गृहे चाप्यष्टमे राशौ तत्र द्वारं न कारयेत् ॥ २० ॥**

**यत्रोन्नतमित्यादि** । देवतापदं तु पूर्वोक्तमेव माहेन्द्रादिकं ग्राह्यम् । तथाच मयः —

"द्वात्रिंशद्देवतांशेषु तेषु माहेन्द्रके पदे ।
राक्षसे पुष्पदन्ते च भल्लाटे च चतुर्ष्वपि ॥
तद्विगीशानमाश्रित्य द्वारं कुर्यात् सुशोभनम् ।
अन्तर्द्वारबहिर्द्वारमेवं युञ्जीत बुद्धिमान् ॥
शेषद्वाराणि सर्वाणि सर्वदोषप्रदानि च ।

इति । इह गृहक्षत एव राक्षसशब्देन व्यपदिष्टः । महाद्वारोपद्वारस्थानान्यधिकृत्य गुरुदेव एवमाह—

"माहेन्द्रे गृहरक्षे च भल्लाटे पुष्पदन्तके ।
महाद्वाराणि चैव स्युरुपद्वाराणि सन्ति चेत् ॥
भृशे पूषणि भृङ्गाख्ये दौवारे शोषनागयोः ।
दितावपि च पर्जन्ये"

इति । तथैव चन्द्रिकायामप्युक्तम् । एवं च सति 'उदितौ च कृते द्वारे वनिताकुलनाशनम्' इति यदुक्तं ग्रन्थकारेण, तन्महाद्वारविषयं ज्ञेयम् । इहोदितिरेव गुरुदेवेन दितिनाम्ना व्यपदिश्यते। **गृहे चाप्यष्टमे राशा-वित्यादि** । अस्यायमभिप्रायः—यत्र गृहं निवेश्यते, तद्देशादिखण्डमेकं राशिचक्रं वितनुयात् । तत्र गृहभर्तुर्जन्मराशितो गणनायामष्टमो राशिर्यत्र भवति, तत्र द्वारं न विन्यसेदिति । "अजकर्कितुलानक्राशिषु द्वारमिष्यते" इत्यन्यत्र दृष्टो विधिस्तु साधारणो ज्ञेयः । अन्योऽपि द्वारस्थानविधिर्ग्रन्थान्तरे एवं दृश्यते —

---

अम्भः कुम्भगतं श्रेष्ठं मध्यमं मीनमेषयोः ।
मकरे च वृषे नीचं ग्रामादेरालयस्य वा ॥

इतीशानगुरुपद्धतौ ।"

"विभज्य नवधा वास्तु पञ्चभागांस्तु दक्षिणे।
त्रिभागान् वामके मुक्त्वा शेषे द्वारं विधीयते॥"

इति॥ २०॥

विप्रस्य प्रतिनियतं द्वारस्थानमपरमाह—

गृहक्षते च माहेन्द्रे ब्राह्मणानां प्रकीर्तितम्।
महीधरे च सोमे च भल्लाटार्गलयोस्तथा॥ २१॥
शयनीयं तु कर्तव्यं प्रशस्तं पूर्वतः शिखा।

गृहक्षत इत्यादि। द्वारलक्षणादिकं चतुर्दशाध्याये वक्ष्यति। प्रतिनियतं द्वारप्रमाणादिकं त्वन्यतोऽवगन्तव्यम्। शयनीयस्थानमाह—महीधर इत्यादिनैकेन श्लोकेन। "शस्त्रायं निर्ऋतौ गृहक्षतपदे शय्यागृहं भूभुजाम्" इति पञ्चाशिकायां दर्शनादयं शय्यास्थानविधिर्ब्राह्मणानामिति प्रत्येतुं शक्यम्॥ २१, २१½॥

अथ क्षत्रियस्य प्रतिनियतं द्वारस्थानादिकमाह—

गृहक्षते पुष्पदन्ते द्वारं स्यात् क्षत्रियस्य तु॥ २२॥
वितथे चान्नभूमिं च गोष्ठागारं तथासुरे।
स्थानभूमिं च गन्धर्वे सदा कुर्याद् विशेषतः॥ २३॥

गृहक्षत इत्यादि। अन्नभूमिः महानसं भोजनस्थानं वा। स्थानभूमिम् आस्थानमण्डपम्। 'स्नानभूमिमि'ति पाठान्तरम्॥ २२, २३॥

वैश्यस्य प्रतिनियतं द्वारादिस्थानमाह—

भल्लाटे पुष्पदन्ते च द्वारे वैश्यस्य पूजिते।
यमे विवस्वति प्रोक्तं गन्धर्वे च गृहक्षते॥ २४॥
शयनीयं प्रकर्तव्यं विद्वद्भिः प्राक्शिरो भवेत्।
पूष्णि वा वारुणे पन्थाः पूर्वोक्ते वा महानसम्॥ २५॥

भल्लाट इत्यादि। यमे विवस्वतीत्यादि शय्यास्थानप्रदर्शनपरं वाक्यम्। प्रोक्तमित्यस्य विद्वद्भिरित्यनेन सम्बन्धः। पूर्वोक्ते वा महा-

नसामिति । 'वितथे चात्रभूमिं चे'ति यदुक्तं तदेवेहापि ग्राह्यमित्यर्थः ॥ २४, २५ ॥

गन्धर्वे स्थानभूमिः स्याद् गोष्ठागारं तथासुरे ।
पैतृके गर्भभूमिः स्याद् वास्तुविद्भिरितीरितम् ॥ २६ ॥

गन्धर्व इत्यादि । इदमपि वैश्यस्यैव । गर्भभूमिः भूगर्भगृहमिति साम्प्रदायिकाः । अन्तर्गृहमित्यन्ये ॥ २६ ॥

शूद्रस्य प्रतिनियतं द्वारादिस्थानमाह —

भल्लाटे च महेन्द्रे च द्वारे शूद्रस्य पूजिते ।
सुग्रीवः पुष्पदन्तश्च मित्रोऽथ वरुणस्तथा ॥ २७ ॥

यस्तत्र शयनीयं स्यात् सर्वेषामिति च स्थितिः ।
दौवारिकप्रमाणं स्याद् भूमिर्वै पैतृकी स्मृता ॥ २८ ॥

महानसं च पूष्णि स्याद् गोष्ठागारं तथासुरे ।
स्थानभूमिं तु गन्धर्वे सदा कुर्याद् विशेषतः ॥ २९ ॥

भल्लाट इत्यादि । सर्वेषामिति च स्थितिरिति । इहोक्तः शयनीयस्थानविधिरयं सर्ववर्णसाधारण इत्यर्थः । पैतृकी भूमिः रुद्रभूमिः । क्षत्रियस्य प्रतिनियतविहारादिस्थानविधिस्तु —

"मध्ये ब्रह्मगृहं नृपास्थितिगृहं मित्रे विहारोऽनिले
ध्यायामोऽर्गलके धनं धनपतौ स्नानादि पर्जन्यके ।
ईशे चाप्यथ भुक्तिसद्म वरुणे नृत्तादि गान्धर्वके
शस्त्राद्यं निर्ऋतौ गृहक्षतपदे शय्यागृहं भूभुजाम् ॥"

"दण्डात् प्राङ्गणमध्यतोऽब्धिशरपद्सक्षादिसङ्ख्यानती-
त्साद्ध्यादथ पौष्पदन्तिकपदे द्वारं प्रचारोचितम् ।
भल्लाटे च गृहक्षतेष्वपि महाद्वाराण्युपद्वारका-
ण्यष्टाशान्तमृगादिकेषु परितः पर्जन्यनिष्ठेष्वपि ॥"

इत्यादिग्रन्थान्तरवचनादवगन्तव्यः । इहानुक्तानां कूपादीनां स्थानान्य-न्यतः प्रदर्श्यन्ते—

"मीने कूपमतीव मुख्यमुदितं सर्वार्थपुष्टिप्रदं
मेषे चापि घटे च भूतिकृदिदं नक्रे वृषेऽर्थप्रदम् ।
आपे कूपमथापवत्सकपदे मुख्यं तथैवेन्द्रजि-
त्कोष्ठे दृष्टमपां पतौ तु शुभदं नारीक्षयं मारुते ॥
कूपं शोभनमन्तरिक्षपदकेऽप्येव तटाकं हितं
माहेन्द्रे च महीधरे च वरुणे सोमे शिवे मेषभे ।
वायौ वा निर्ऋतौ च दृष्टमथवा स्नानादिपानादिषु
प्रायो नैकजलं नदीजलमृतेऽनान्यत् पृथक् कल्पयेत् ॥"

"कार्तान्त्यां खलसद्म धान्यभवनं तत्रापि वा नैर्ऋते
कुर्वीताथ धनालयं धनपतौ प्राच्यां तथापां पतौ ।
सिंहे वाऽलितुलाकुलीरभवने धान्यालयोक्तेषु वा
धान्यागारविधिर्धनोदितपदे कुत्रापि चावश्यके ॥"

इत्यादि ॥ २७-२९ ॥

एवं द्वारादिस्थाननिर्णयः प्रपञ्चितः । इदानीं गृहस्थाननिर्णयं कर्तुमुपक्रमते —

यदुक्तं वेदिविस्तारमायामं चापि तत्समम् ।
एवं कृत्वा चतुरश्रं तन्मध्ये सूत्रमालिखेत् ॥ ३० ॥

यदुक्तमित्यादि । यदुक्तमिति । तृतीयाध्याये इति शेषः । आयामं चापि तत्सममिति । विस्तारायामयोर्मानं समानं कृत्वेत्यर्थः । एवं कृते भूतलं चतुरश्रं भवतीत्याह—एवं कृत्वा चतुरश्रमिति । सूत्रमालिखेदिति । सूत्रमास्फालयेदित्यर्थः । सूत्रलक्षणं चोक्तं गुरुदेवेन—

"कार्पाससूत्ररज्जुः स्यात् प्रशस्ता सुदृढा समा ।
शाणी कौश्यथवा मौञ्जी तया सूत्रं प्रसारयेत् ॥"

इति ॥ ३० ॥

सूत्रास्फालनपरिपाटीमाह —

प्रागग्रं चाप्युदगग्रं ब्राह्मं याम्यं च नामतः ।
सूत्रद्वयेन सा वेदिश्चतुःखण्डी च संभवेत् ॥ ३१ ॥

प्रागग्रमित्यादि । ब्राह्मं याम्यं च नामत इति । प्रागग्रस्य ब्राह्ममिति, उदगग्रस्य याम्यमिति च संज्ञेत्यर्थः । वेदिः भूमिः ॥ २१ ॥

उक्तसूत्रद्वयास्फालनेन निष्पन्नानां चतुर्णां खण्डानां नामान्याह —

मानुष्यमथ याम्यं च दैवमासुरमेव च ।
ऐशान्यादिपदानां च नामान्येवं विदुर्बुधाः ॥ २२ ॥

मानुष्यमित्यादि । नामानीति । यथाक्रममिति शेषः ॥ २२ ॥

तेषु मनुष्यगृहनिवेशनार्हं खण्डमाह —

स्थानं नृणां तु मानुष्ये दैवे चापीति केचन ।
निन्द्यावासुरयाम्यौ तु पदे गृहविधौ नृणाम् ॥ २३ ॥

स्थानमित्यादि । स्थानं गृहनिवेशनस्थानम् । आसुरयाम्यौ वाय्वग्निकोणस्थखण्डौ ॥ २३ ॥

क्लृप्ते गृहनिवेशनस्थाने वास्तुपूजां विदध्यादित्याह —

सङ्कल्प्य तस्यां भुवि वेदिकायां
स्फीतां विदध्यादथ वास्तुपूजाम् ।
कृत्वा चतुःषष्टिपदानि भूयः
कोणेषु सूत्रे विनिवेशयेद् द्वे ॥ २४ ॥

सङ्कल्प्येत्यादि । सङ्कल्पो मानसं कर्मामुकामुकस्यैतादृशरूप-वर्णायुधादियुक्तस्य देवस्येदमिदं स्थानमिति प्रकल्पनात्मकम् । तत्र देवानां वर्णक्लृप्तिं प्रत्येवमुक्तं श्रीकुमारेण —

"ईशानाद्याः श्वेतकृष्णौ च शुक्लः श्यामो रक्तः श्यामकृष्णाच्छवर्णाः ।
रक्तश्यामौ शुक्लकृष्णौ च रक्तो दूर्वाश्यामः पीतकृष्णो जपाभः ॥
धूम्रो रक्तः शङ्खवर्णोऽमृताभः कृष्णः सन्ध्यामेघरुग् धूम्रकृष्णौ ।
हेमाभस्ते धूम्रमुक्ताजपाभाः श्यामश्वेतौ कृष्णरक्तौ क्रमात् स्युः ॥
सिन्दूराभस्त्वार्यकाद्याश्चतस्रः श्वेतश्यामौ धूम्रकृष्णौ क्रमेण ।
सावित्राद्याः पीतरक्तौ घनाभौ मध्ये ब्रह्मा तप्तहेमप्रभः स्यात् ।

शर्वस्कन्दः श्वेतवर्णोऽर्यमाह्वो रक्तः कृष्णो जम्भकोऽन्यः सिताभः ।
श्यामा धूम्रा रक्तवर्णा चरक्याद्याः स्युर्मन्दारार्तवाभा क्रमेण ॥ ”

इति । एवमायुधभूषणादयोऽपि ग्रन्थान्तराद् ज्ञातव्याः । **तस्यां भुवि वेदिकायामिति** । या गृहस्थापनाय शोधनादिना साधिता, तस्यां भुवीत्यर्थः ।

अथवा,

“मण्डलं वास्तुनो मध्ये गोमयेन प्रकल्पयेत् ।
कलशं तत्र विन्यस्येत् सप्रसूनं सकाञ्चनम् ॥
वास्तुदेवास्ततः कल्प्या यथास्थाननियोगतः ।”

इत्याद्युक्तविधया कल्पिते मण्डले या । एतादृशमण्डलकरणेऽपि विशेषमाह शिल्परत्ने—

“तत्तद्वर्णपरागैर्वा चित्रिते मण्डलोत्तमे ।
मनोहरे गुरुः पूजामुपहारैः समाचरेत् ॥”

इति । तत्तद्वर्णपरागैरित्यस्यायमर्थः—तत्तद्देवानां ये ये वर्णाः पूर्वं प्रकटिताः तद्वर्णैस्तण्डुलहरिद्रादिचूर्णैरिति । **स्फीतामिति** । यस्य यस्य देवस्य यद्यत् पूजोपकरणं मन्त्रगुरुदेवादिभिरुपदिष्टं तेन तेन पूर्णामित्यर्थः । उक्तपूजाद्रव्याणामलाभे,

“प्रत्येकमुक्तद्रव्याणामलाभे कुसुमाक्षतैः ।
सुगन्धधूपदीपैश्च शुद्धान्नेन स्मृतो बलिः ॥”

इति गुरुदेवोक्तो विधिर्ग्राह्यः । वास्तुपूजां वास्तुपुरुषशरीरनिष्ठदेवतापूजाम् । वेदिकायां तत्तद्देवतास्थानं कया विधया कार्यमित्याह—**कृत्वेत्यादि** । **चतुष्षष्टिपदानीति** । चतुष्षष्टिपदवास्तुमण्डूकनाम्ना व्यपदिश्यते । **कोणेष्वित्यादि** । ईशादिकोणेषु सूत्रपातनं च देवतापदविभागायेति मन्तव्यम् ॥ ३४ ॥

वास्तुपूजायां तु प्रसक्तायां प्रथमं तद्देवतासंख्यां संगृह्णाति—

**वास्तुदेहस्थितास्तत्र त्रिपञ्चाशच्च देवताः ।**
**पूजयेत् क्रमशस्तासां विभागः प्रोच्यतेऽधुना ॥ ३५ ॥**

वास्तुदेहस्थिता इत्यादि। वास्तुदेहस्थिता इति। वास्तोः स्वरूपं, तद्देहे देवतानां स्थितौ कारणं चोपरि वक्ष्यति। त्रिपञ्चाशच्च देवता इति। अन्तर्ब्रह्माद्यास्त्रयोदश, तद्बाह्ये ईशानाद्युदित्यन्ता द्वात्रिंशत् कोष्ठाद् बहिरपदस्थिताश्चरक्यादिपिलिपिञ्छकान्ता अष्टाविति त्रिपञ्चाशदित्यर्थः। क्रमश इति। क्रमश्च गुरुदेवाद्युक्तोऽवगन्तव्यः। विभाग इति। पदस्येति शेषः ॥ ३५ ॥

पूर्वश्लोकोक्तं देवतापदविभागमेवाह—

ब्रह्मा मध्यचतुष्पदप्रणिहितो, दिक्षु त्रिपद्या स्थिता-

स्तद्बाह्येऽथ चतस्र एकपदके द्वे द्वे स्थिते पार्श्वयोः।

कोणस्याप्यथ षोडशार्धपदगाः कोणेषु बाह्ये तथा

दिक्स्थाः षोडश देवता द्विपदगाश्चाष्टौ बहिर्दिग्गताः ॥ ३६ ॥

ब्रह्मेत्यादि। अत्रायं योजनाक्रमः—ब्रह्मा मध्यचतुष्पदप्रणिहितः, अथ तद्बाह्ये दिक्षु चतस्रः त्रिपद्या स्थिताः, कोणस्यापि पार्श्वयोः द्वे द्वे एकपदके स्थिते, अथ कोणेषु षोडश अर्धपदगाः स्थिताः, तथा बाह्ये दिक्स्थाः षोडश द्विपदगाः, बहिर्दिग्गता अष्टौ पदभोगवर्जिता इति। देवताशब्दश्च सर्वत्र योज्यः। 'दिक्षु द्विपद्या स्थिता' इति पाठे सर्वेषां कोष्ठानामसङ्ग्रहः सम्भवति। 'दिक्ष्वार्यकाद्याः स्थिताः' इति शिल्परत्नपाठे आर्यकादीनां चतुर्णां पदभोगो न विवृतः स्यात्। एवमन्येऽपि पाठा उक्तविधयानुपपन्ना ज्ञेयाः। इह पदभोगे कांश्चिन्मतभेदान् उपरिष्टाद् निरूपयिष्यामः ॥ ३६ ॥

एतासां देवतानां नामानि क्रमेण पठति—

ईशानपर्जन्यजयन्तशक्रध्वान्तापनुत्सत्यभृशान्तरिक्षाः।

अग्निश्च पूषा वितथाभिधानो गृहक्षतः प्रेतनिवासभर्ता ॥ ३७ ॥

गन्धर्वसंज्ञस्त्वथ भृङ्गराजो

मृगाभिधानः पितरः प्रशस्ताः।

दौवारिकः पश्चिमपूर्वसंस्थः
सुग्रीवसंज्ञस्त्वथ पुष्पदन्तः ॥ ३८ ॥
भूयः प्रशस्तो वरुणोऽसुरश्च
शोषश्च रोगः पवनो भुजङ्गः।
मुख्योऽथ भल्लाटनिशाकरौ च
भूयोऽर्गलादित्युदितिक्रमेण ॥ ३९ ॥
विष्कम्भबाह्यस्थपदप्रविष्टा
द्वात्रिंशदेताः परितः प्रदिष्टाः।
अन्तःस्थकोणार्धपदेषु चाष्टौ
वक्ष्ये चतस्रश्च दिशासु योज्याः ॥ ४० ॥

सावित्रः सविता हुताशनदिशि ब्रह्माग्निमध्येऽर्धगा-
विन्द्रश्चेन्द्रजयश्च राक्षसदिशि ख्यातौ पदार्धेस्थितौ
रुद्रो रुद्रजयश्च वायुदिशि च ख्यातौ तथेशार्धगा-
वापश्चापि तथापवत्स इति च द्वन्द्वस्थिता देवताः ॥ ४१ ॥

पूर्वादिदिक्षु क्रमशस्त्रिपद्या
रयादार्यकश्चापि तथा विवस्वान्।
मित्रश्च पश्चात् तु महीधरश्च
ब्रह्मा च मध्यस्थचतुष्पदस्थः ॥ ४२ ॥

दिक्षु कोणेषु बाह्यस्थाः प्रवदामि पुनः क्रमात्।
शर्वस्कन्दोऽर्यमाद्दश्च जम्भकः पिलिपिञ्छकः ॥ ४३

चरकी च विदारी च पूतना पापराक्षसी ।
संस्थाप्यैवं चतुःषष्टिपदेष्वेताः प्रपूजयेत् ॥ ४४॥

ईशानेत्यादि तद्विन्यासश्चेत्थम्—

इति । तथा च मयः—

"अष्टाष्टांशे कस्य पस्तन्मुखानामिष्टं गांशं व्यञ्जनं षोडशानाम् ।
अष्टानां कः षोडशानां खभागो मण्डूकाख्ये स्थण्डिले तैतिलेषु ॥"

इति । कस्य ब्रह्मणः । पः चत्वारि पदानि । गांशः त्रीणि पदानि । व्यञ्जनम् अर्धपदम् । कः एकं पदम् । खभागः द्वे पदे । मण्डूकं चतुष्षष्टिपदो वास्तुः । तैतिलेष्विति । तैतिली नामाचार्यः, तत्कृतो ग्रन्थ उपचारात् तैतिली । तं ग्रन्थमधीयत इति तैतिलाः । अण् । 'नस्तद्धिते' (६-४-१४४) इति टिलोपः । तेषु विषय इत्यर्थः । इदं च 'नस्तद्धिते' इति सूत्रे काशिकायां स्पष्टम् । तिकादिषु (४-१-१५४) च तैतिलशब्दः पठ्यते । तस्य व्युत्पत्तिः न्यासकारेणैवं प्रदर्शिता—"तिले तिलः तितिलः पृषोदरादिः । ततो मत्वर्थे इन् । तितिलिनोऽपत्यम् । अण् । 'नस्तद्धिते' इति टिलोपः । तैतिल" इति । तैतिली शाखान्तरप्रवर्तक इति तद्विदः । अयं तिकादिषु सूचितः तितिली च एको भिन्नो वेति न ज्ञायते । सर्वथास्मात् प्रकारद्वयात् तैतिलिविष्याः तितिलिवेदया वा तैतिला इति निर्णेतुं शक्यम्" तैतिला देवाः । अयमर्थः मयमते बहुत्र प्रकरणाद् विज्ञायते । यथा आधिष्ठानमानप्रदर्शनप्रकरणे "तैतिलानां चतुर्हस्तं त्रिहस्तार्धं द्विजन्मनाम्" इत्यादिषु । परन्तु तस्य शब्दस्य देवेषु वृत्तिः कथा विधयेति विद्वद्भिश्चिन्तनीयम् । प्रकृतमनुसरामः । वराहमिहिरकृतो देवतापदविभागस्त्वेवं —

"अष्टाष्टकपदमथवा कृत्वा रेखाश्च कोणगास्तिर्यक् ।
ब्रह्मा चतुष्पदोऽस्मिन्नर्धपदा ब्रह्मकोणस्थाः ॥
अष्टौ च बहिष्कोणेष्वर्धपदास्तदुभयतः सार्धाः ।
उक्तेभ्योऽन्ये शेषास्ते द्विपदा विंशतिस्ते हि ॥"

इति । अस्य विन्यासस्त्वेवम्—

एवमेवान्यत्रापि दृश्यते । तद् यथा—

"चतुरश्रीकृते क्षेत्रे पूर्ववद् भाजितेऽष्टभिः ।

चतुष्षष्टिपदो वास्तुश्चतुष्षष्ट्या पदैर्भवेत् ॥
अस्मिन् पदानि चत्वारि भुनक्त्यन्तः पितामहः ।
अर्यमाद्याः सुराश्चात्र द्वे द्वे मध्यगताः पदे ॥
मध्येऽष्टौ बाह्यतोऽष्टौ ये स्थिताः कोणेषु चाष्टसु ।
ये देवाः सर्व एवात्र ते पदार्धभुजः स्मृताः ॥
पर्जन्योऽथ मृशः पूषा भृङ्गदौवारिकौ तथा ।
शोपनागादितिप्रान्ताः स्युरध्यर्धपदस्पृशः ॥
जयन्तादिषु बाह्येषु चरकान्तेषु कीर्तिता ।
प्रत्येकं षोडशस्त्वत्र सुरेषु द्विपदस्थितिः ॥"

इति । इहार्गल एव चरकभुजगपदाभ्यां व्यपदिश्यते । गुरुदेवोऽप्येवमाह ॥ ३७—४४ ॥

अत्रैव चतुष्षष्टिपदे प्रकारान्तरेण देवतापदविभागमाह —

एवं चाष्टकृतिप्रभिन्नपदगा ब्रह्मा चतुष्कोष्ठगो
मध्ये तस्य चतुष्पदप्रणिहिता दिक्स्थाश्चतस्रो बहिः ।
द्वे द्वे कोणगते तथैकपदगे द्वे द्वे पदार्धस्थिते
द्वे द्वे दिक्षु बहिः पदद्वयगते शिष्टाः पदैकस्थिताः* ॥ ४५ ॥

एवं चेत्यादि । अस्यापि विन्यासः प्रदर्श्यते—

शेषम् स्पष्टम् । एवं चतुरश्रे पदविभागः स्पष्टीकृतः । वृत्तादिषु तु दिङ्मात्रमुदाह्रियते । वृत्ते एकाशीतिपदके पदविभागो यथा—

"एकाशीतिपदे क्षेत्रे कर्तव्यं वृत्तपञ्चकम् ।
बाह्ये वृत्तद्वयं यत्तत् पदद्वात्रिंशता युतम् ॥
तृतीयं द्वादशपदं चतुर्थं तु चतुष्पदम् ।
केवलं पञ्चमं कार्यं ब्रह्मा पद्मस्त्वयाश्रितः ॥

---

* इत उपरि क्वचिद् ग्रन्थेऽधिकः पाठः—
"एकाशीतिपदेऽथवा विनिहिताः संपूजयेद् देवता
मध्ये तत्र पितामहो नवपदान्याश्रित्य संतिष्ठते ।

शिख्यादयस्तु द्विपदा बहिर्विष्कम्भसंश्रिताः ।
अर्यमाद्याः सुराः सर्वे त्रिपदाः परिकीर्तिताः ॥"

इति । अत्र शिखीति ईशान एव निर्दिश्यते । अथ वृत्ते चतुष्षष्टिपदके पदविभागो यथा—

"वृत्तानि चत्वारि समानि कृत्वा वास्तोश्चतुष्षष्टिपदस्य सम्यक् ।
अधस्तदर्धेन च सूर्यवेदैर्विभज्यते वृत्तचतुष्टयं च ॥
शिख्यादयश्चैकपदे निविष्टाः पदद्वये चार्यमकादयश्च ।
आपादयश्च त्रिपदाः प्रदिष्टाश्चतुष्पदश्चात्र पितामहः स्यात् ॥"

इति । अत्र 'अधस्तदर्धेन च'त्यादेरयमभिप्रायः—बहिः प्रथमवृत्ते यावन्ति पदानि तदर्धपदसङ्ख्याकमन्तस्तदनन्तरवृत्तम् । प्रथमवृत्ते च द्वात्रिंशत् पदानि सन्तीति तत्स्थदेवतागणनया सिध्यति । अतो द्वितीयवृत्ते षोडशपदानीति लभ्यते । तथा अन्तस्तदनन्तरे तृतीयवृत्ते सूर्यसङ्ख्याकानि द्वादशपदानि तदनन्तरे चतुर्थे वृत्ते वेदसंख्याकानि चत्वारि पदानि च यथा वर्तेरन् तथा तद्वृत्तं विभजनीयमिति । अनयोर्विन्यासः बृहत्संहिता-दिषु द्रष्टव्यः । एवं त्र्यश्रषडश्रादिष्वप्युन्नेयम् ॥ ४५ ॥

आश्रित्य मार्गं मतिमानथैषा-
मेकं च वास्तुं परिकल्प्य तत्र ।
अङ्गेषु तस्याप्यथ देवतास्ताः
सङ्कल्प्य सम्यक् परिपूजयेच्च ॥ ४६ ॥

आश्रित्येत्यादि । एषामिति । ग्रन्थान्तरोक्तमतान्तरापेक्षया बहुवचनम् । वास्तुं वास्तुपुरुषम् । मतिमानित्यनेन भूपरिमाणन्यूनाधिकभाव-निबन्धनमन्यतमोपादानमिति द्योतयति ॥ ४६ ॥

---

तद्बाह्यावरणद्वये द्विपदगे द्वे द्वे स्थिते कोणत-
स्तन्मध्ये परितश्च षट्पदगता दिक्स्थाश्चतस्रः क्रमात् ॥
द्वात्रिंशत् परितस्तथैकपदगा बाह्यावृतौ कल्पये-
दीशाद्याः पुनरार्यकप्रभृतयः पूर्वादिदिक्संस्थिताः ।
ईशान्तश्च हुताशनादिषु ततः कोणेषु चाष्टौ क्रमात्
सावित्रप्रमुखास्तथैव परितः शिष्टा बहिर्दिग्गताः ॥"

अथ वास्तुदेवतापूजायाः अवश्यकर्तव्यत्वोपदेशाय तत्सम्बद्धां कथामाह—

आसीत् पुरा सकललोकभयङ्करश्च
क्रूरोऽसुरो भुजबलादतिगर्वितश्च ।
क्षोणीतले विनिहितो विजितः प्रशान्तो
देवैः स वास्तुपुरुषश्चतुरस्रसंस्थः ॥ ४७ ॥

आसीदित्यादि । एष वास्तुपुरुषकथावस्तुसंक्षेपः—

पुरा किल देवासुरे युद्धे विष्णुसाह्येन पराजितानां स्वशिष्याणां विजयाय सलक्षणम् छागमभिचारविधानेन जुह्वतः शुक्रस्य स्वेदाम्भःकणिकायामग्नौ पतितायां तत एको महासुरोऽतिभीषणाकारः समुदभूत् । छागानन्तरत्वाच्छागासुर इति प्रख्यातः स चासुरसम्राट् स्वपितुः शुक्रस्याज्ञया देवान् भुजबलेन विद्राव्य तदाश्रयाणां लोकानामपि महत् कदनमुपजनयन्नवर्तत । अथ शुक्रतपःप्रभावात् क्षणे क्षणे वर्धिष्णुनामुना वीर्योत्सिक्तेन महासुरेण बहु कदर्थिता देवाः कालपर्ययात् किञ्चिदपि प्रतिकर्तुमपारयन्तो दुष्टदमनदीक्षितं भगवन्तं त्रिपुरान्तकं शरणमापुः । ततः स्वभक्तेभ्यो द्रुह्यतेऽस्मै क्रूराय क्रुध्यन् कृपानिधिर्महादेवोऽस्य प्रशमनाय स्वतृतीयनेत्रात् सर्वसंहारक्षमं प्रलयानलमुत्थाप्य तमभि प्राहिणोत् । ज्वालामालया व्याप्तदिगन्तराले तस्मिंश्च कालानले त्रिलोकीं भ्रमन्तमपि तमभिद्रुत्य दग्धुमुपस्थिते स छागासुरो भीतभीतः प्रशान्तमनाः शरणकामनया तनीयसीं तनुमाश्रित्य महेश्वरस्योदरं प्रविवेश । तेन तुष्टो भगवानथास्मै अभयं प्रदाय शुक्ररूपेण स्वोदरात् तं निर्गन्तुमाज्ञापयत् । तथा निर्गतत्वात् तदाप्रभृति शुक्र इति प्रथितः स भगवन्तं दण्डवत् प्रणत एव सन् क्षोणीतले वस्तुं, स्वशरीरे ब्रह्मादिकानवस्थापयितुं च वरमयाचत । तदनुसारेण भगवानपि—

"वस्तुं वरं त्वया ।
"वृतोऽहं यत् ततो नाम्ना वास्तुकोऽसि तथास्तु ते ।
वसन्तु च त्वयि प्रीताः शतानन्दादिदेवताः ॥

अद्यप्रभृति भूलोके दैवं वान्यच्च मानुषम् ।
कुर्वते वास्तु वासार्थं प्रथमं त्वां यजन्तु ते ॥
पुष्पैश्च धूमदीपैश्च बलिभिश्च विलक्षणैः ।
त्वं च त्वद्देहसंस्थाश्च पूज्याः स्युर्देवताः क्रमात् ॥
एवं मयैव विहितं कुर्वतां वास्तुपूजनम् ।
तदायतनवेश्मादौ वसतां सन्तु सम्पदः ॥
अकृत्वा वास्तुयजनं प्रासादभवनादिकम् ।
कृतं तदासुरं सर्वं भूयात् तत्र च यत् कृतम् ॥"

इति तस्मै वरं दत्तवान् । तच्छरीरे वस्तुं देवान् न्ययोजयच्च । तेन स महेशं प्रणत एवाद्यापि क्षोणीतले शेत इति । एषा च कथा शैवसम्प्रदायप्रवृत्तानां गुरुदेवादीनां मतमनुसृत्य विवृता । वराहमिहिरस्तु —

"किमपि किल भूतमभवद् रुन्धानं रोदसी शरीरेण ।
तदमरगणेन सहसा विनिगृह्याधोमुखं न्यस्तम् ॥
यत्र च येन गृहीतं विबुधेनाधिष्ठितः स तत्रैव ।
तदमरमयं विधाता वास्तुनरं कल्पयामास ॥"

इतीतिहासममुं वर्णयति । एतदनुरोधेन तु प्रकृतग्रन्थकारोऽपि 'आसीदि'-त्यादि वदतीति बोद्धव्यम् । क्षोणीतले विनिहित इत्यादि । क्षोणीतल इत्यनेन कृत्स्नं भूतलं तच्छरीरेण व्याप्तमिति द्योतयति । तादृशस्य च पृथक् पृथक् प्रासादगृहारामादिषु स्थितिः घटाकाशवद् ज्ञेया । चतुरश्र-संस्थ इति । चतुरश्ररूप इत्यर्थः ॥ ४७ ॥

तस्य वास्तुपुरुषस्य शयनप्रकारमाह —

ईशे तस्य शिरस्तदा विनिहितं पादौ निरृत्यां स्थितौ
वायव्ये च हुताशने च भुजयोः संस्थापितौ कूर्परौ ।
क्षिप्तं वक्षसि हस्तयोस्तलमतः प्रोत्तानतां प्रापित-
स्तस्याङ्गेषु च देवता विनिहिता यद्वत् प्रवक्ष्ये तथा ॥ ४८ ॥

ईश इत्यादि । ईशे ईशकोणे । अत्र विशेषो ग्रन्थान्तरेऽभिहितः —

"एकाशीतिपदस्येशदिग्विभागाश्रितं शिरः ।
माहेन्द्रीसंश्रित विद्याचतुष्पाष्टिपदस्य तु ॥"

इति । शेषं सुगमम् ॥ ४८ ॥

वास्तुशरीरे देवानां स्थानविशेषानाह तस्येश इत्यादिनाध्यर्धेन श्लोकत्रयेण —

तस्येशः शिरसि स्थितश्च नयने सव्ये तथा दक्षिणे
पर्जन्यश्च तथोदितिश्च वदने चापः पुनः संस्थितः ।
भूयस्तस्य च कन्धरे विनिहितः स्यादापवत्सस्तथा
पश्चात् तस्य तथांसयोर्विनिहिते स्यातां जयन्तादिती ॥४९॥

भूयो महेन्द्रप्रमुखार्गलाद्याः
संस्थापिताः स्युर्भुजयोः क्रमेण ।
सावित्ररुद्रौ सविता जयश्च
भूयः प्रकोष्ठद्वयसंस्थिताः स्युः ॥ ५० ॥

ब्रह्मा च नाभौ स्तनयोर्द्वये च
संस्थापितावार्यमहीधरौ च ।
कुक्षौ विवस्वांश्च तथैव मित्रः
पादद्वये स्युः पितरो निविष्टाः ॥ ५१ ॥

इन्द्रश्च मेढ्रे वृषणद्वये च
पश्चात् तथैवेन्द्रजयो निविष्टः ।
नाम्ना स्वकेन प्रणवादिनैतान्
मन्त्रेण सम्यक् परिपूजयेच्च ॥ ५२ ॥

अत्रोक्तानां पर्जन्यादीना स्वरूप ग्रन्थान्तरे एवं प्रदर्शितम् —

"मध्ये य एव देवानां स्थितो ब्रह्माब्जसम्भवः ।
स सहस्रनयनोऽचिन्त्यविभवो जगतां प्रभुः ॥

योऽयं वह्निरिहोक्तः स सर्वभूतहरो हरः।
पर्जन्यनामा यश्चायं वृष्टिमानम्बुदाधिपः॥
जयन्तस्तु द्विनामाख्यः कश्यपो भगवानृषिः।
महेन्द्रस्तु सुराधीशो दनुजानां विमर्दनः॥
आदित्यं पुनरिच्छन्ति विवस्वन्तमहस्करम्।
सत्यो भूतहितो धर्मो भृशः कामोऽथ मन्मथः॥
योऽन्तरिक्षः स्मृतो देवस्तन्नभः समुदाहृतम्।
मारुतो वायुरुद्दिष्टः पूषा मातृगणः स्मृतः॥
अधर्मो वितथाख्यः स्यात् कलेरप्रतिमः सुतः।
गृहक्षतः पुनर्योऽत्र स चन्द्रतनयो बुधः॥
प्रेताधिपो मतः श्रीमान् यमो वैवस्वतश्च सः।
गन्धर्वो भगवान् देवो नारदः परिकीर्तितः॥
भृङ्गराजमिहेच्छन्ति राक्षसं निर्ऋतेः सुतम्।
यो मृगोऽस्मिन्ननन्तः स स्वयम्भूर्धर्म इत्यपि॥
*पितरस्तु स्मृता देवाः पितृलोकनिवासिनः।*
स्मृतो दौवारिको नन्दी प्रमथानामधीश्वरः॥
आदिः प्रजापतिः स्रष्टा मनुः सुग्रीव ईरितः।
पुष्पदन्तस्तु विनतातनयः स्यान्महाजवः॥
वरुणः पायसां नाथो लोकपालः स कीर्तितः।
असुरो राहुरर्केन्दुमर्दनः सिंहिकात्मजः॥
शोषस्तु भगवानेष सूर्यपुत्रः शनैश्चरः।
पापयक्ष्मा क्षयः प्रोक्तो रोगस्तु कथितो ज्वरः॥
भुजङ्गमानामधिपः श्रीमान् नागस्तु वासुकिः।
त्वष्टा स्यान्मुख्यसंज्ञोऽत्र विश्वकर्माभिधश्च सः॥
चन्द्रो भल्लाट इत्युक्तः कुबेरः सोमसंज्ञितः।
चरको व्यवसायाख्यः श्रीरिहादितिसंज्ञिता॥
दितिरत्रोच्यते शर्वः शूलभृद् वृषभध्वजः।
हिमवानाप इत्युक्त आपवत्स उमा स्मृता॥

आदित्यस्त्वर्यमा वेदमाता सावित्र उच्यते ।
देवी गङ्गाथ विद्वद्भिः सवितेति प्रकीर्तिता ॥

मृत्युः शरीरहर्तासौ विवस्वानिति स स्मृतः ।
जयाभिधस्तु वज्रीति स्यादिन्द्रो बलवान् हरिः ॥

मित्रो हलधरो माली रुद्रस्तूक्तो महेश्वरः ।
राजयक्ष्मा गुहः प्रोक्तः क्षितिध्रोऽनन्त उच्यते ॥

चरकी च विदारी च पूतना पापराक्षसी ।
रक्षोयोनिभवा ह्येता देवतानुचरीर्विदुः ॥''

इति । नाम्नेत्यादि । प्रणवादिनेति । नमोन्तकेनेत्यपि योज्यम् । एवं च 'ओं ब्रह्मणे नमः' इत्यादिमन्त्रस्वरूपमुद्दिष्टं भाति । समुच्चयकारस्तु — 'आद्यं मनुं विदुरथ प्रणवप्रणामपूर्वं स्वनाम रसवर्णकमक्षराढ्यम्' इति वदन् 'ओं नमो ब्रह्मणे' इति ब्रह्ममन्त्रस्वरूपं प्रकटयति । एवमन्येषामपि देवानामूह्यम् । परिपूजयेचेति । चशब्देन पञ्चोपचारैर्बलिदानं च सङ्ग्राह्यम् । अयं च वास्तुबलिः रात्रावेवेति शास्त्रात् समुदाचाराच्चावगम्यते ॥ ४९–५२ ॥

इति वास्तुविद्यालघुविवृतौ द्वारादिस्थाननिर्णयवास्तुयजनवास्तुपुरुषसंस्थानं नाम
चतुर्थोऽध्यायः ॥

---

## अथ वेदीसंस्थानं नाम पञ्चमोऽध्यायः ।

पूर्वाध्याये ''मानुष्यमथ याम्यं च'' इत्यादिश्लोकद्वयेन गृहनिवेशनस्थानमुक्तम् । तत्रापि गृहस्थानं विवेक्तुमुपक्रमते —

चतुःषष्टिपदं कुर्यान्मानुष्येण पदेन वा ।
मध्ये चतुष्पदं तत्र ब्रह्ममङ्गल्यमण्डपम् ॥ १ ॥

चतुष्षष्टीत्यादि । वाशब्दः पक्षान्तरप्रदर्शनपरः । पक्षान्तरं च ''दैवे चापीति केचन'' इत्यनेन प्रदर्शितम् । तथा च दैवेन मानुष्येण वा पदेन खण्डेन चतुष्षष्टिपदं कुर्यादित्यर्थः । समतले भूतले पूर्वोक्तप्रकारेण

ग्राह्ययाम्याख्यसूत्रद्वयास्फालनेन खण्डचतुष्कं सम्पाद्य तत्रैश्याश्रितं मानुषखण्डं नैर्ऋत्याश्रितं दैवखण्डं वा चतुष्पष्टिकोष्ठकं विदध्यादित्यभिप्रायः । अथ तत्पदविनियोगमाह — मध्ये इत्यादि । सर्वमध्यं चतुष्पदं ब्रह्मस्थानाख्यं, तत्र न किञ्चिदपि निवेशयेत्, अङ्कणस्थानाय तदुत्सृजेदित्यर्थः ॥

तत्परितः स्थितानि द्वादशपदानि दैविक्यावृतिरिति, तदभितः स्थितानि विंशतिः पदानि मानुष्यावृतिरिति चावृतिद्वयं गृहनिवेशनोचितमित्याह —

दैविक्यावृतिरेका च पदैर्द्वादशभिः स्मृता ।
आवृतिः पुनरन्या तु द्विघ्नपङ्क्तिपदान्विता ॥ २ ॥

दैविक्यावृतिरित्यादि । अन्या मानुषीत्यर्थः । द्विघ्नपङ्क्तिपदान्वितेति । द्विघ्ना द्विगुणिता या पङ्क्तिः दशसङ्ख्या तत्सङ्ख्याकानि यानि पदानि विंशतिः तैरन्वितेत्यर्थः 'पङ्क्तिद्विघ्नपदान्विते'ति पाठान्तरम् ॥ २ ॥

उक्ताया द्वितीयावृतेर्बहिर्यानि अष्टाविंशतिः पदानि सन्ति तानि गृहनिवेशनानर्हा तृतीया पैशाचीति संज्ञितावृतिरित्याह —

पैशाची सा विनिन्द्या स्यादष्टाविंशत्पदान्विता ।
आवृतिर्या तृतीया स्याद् गृहं तत्र न विन्यसेत् ॥ ३ ॥

पैशाची सेत्यादि ॥ ३ ॥

अथावृतौ तु दैविक्यां मन्दिरं कारयेन्नृणाम् ।
पदमानसमस्तारो द्विपदो दीर्घ उच्यते ॥ ४ ॥

अथेत्यादि । दैविक्यामिति मानुष्या अप्युपलक्षणम् । तयोर्निवेशनीयस्य गृहस्य प्रमाणमाह — पदमानेत्यादि । अत्र साम्प्रदायिकाः — विस्तारे एकेन पदप्रमाणेन कल्पिते तद्द्विगुणं दैर्घ्यं कार्यमित्यभिप्राय इति वदन्ति । 'पादमानसमस्तार' इति पाठान्तरम् । मयस्तु सामान्यतः शालायामकल्पनं प्रत्येनमाह —

"विस्तारात् पादमाधिक्यमर्धाधिकमथापि वा ।
त्रिपादं द्विगुणायामं तस्मात् पादार्धकं त्रिपात् ॥

त्रिगुणान्तप्रमाणं चैवायामाश्चाष्टधा स्मृताः ।
सर्वे दैर्घ्याधिकाणां तु द्विगुणं तु नृणां मतम् ॥"

इति । पञ्चविधमुत्सेधकल्पनं च तेनैव प्रदर्शितम् । यथा —

"विस्तारसममुत्सेधं सपादं सार्धमेव वा ।
त्रिपादं द्विगुणं चैव उत्सेधः पञ्चधा स्मृतः ॥"

इति ॥ ४ ॥

अत्र उत्तमादीन् स्तम्भसमुच्छ्रायानाह —

**यावान् गृहस्य विस्तारस्तावान् पादसमुच्छ्रयः ।**
**पादोनश्चार्धमेवं स्यादुत्तमाधममध्यमम् ॥ ५ ॥**

यावानित्यादि । पादशब्दः स्तम्भपर्यायः । तथाच मयः —

"स्थाणुः स्थूणश्च पादश्च जङ्घा च चरणोऽङ्घ्रिकः ।
स्तम्भश्च तलिपः कम्पः पर्यायवचनानि हि ॥"

इति । एवञ्चायं श्लोकार्थः — गृहविस्तारेण तुल्यप्रमाणः पादसमुच्छ्रयः उत्तमः, तस्मात् पादोनः मध्यमः, तस्मादर्धं हीनः अधमः इति । उत्तमाधममध्यममित्यत्र यथासङ्ख्यं न विवक्षितम् । 'पादोनः सार्धम्' इति क्वचित् पाठः ॥ ५ ॥

एवमावृतिद्वये गृहनिवेशनप्रसङ्गात् सामान्यतस्तत्प्रमाणं प्रदर्शितम् । सिंहावलोकितकेन पुनरपि पूर्वोक्तं गृहनिवेशनस्थानमेव चिन्तयति —

**अथवा समचतुरश्रे षोडशपदमेव कल्पयेत् क्षेत्रम् ।**
**तत्र च नैर्ऋतनिर्ऋतौ मन्दिरमुदितं च दैविके खण्डे ॥ ६ ॥**
**निर्ऋतावैशे कुर्यादीशेशानं तदुत्तमं स्थानम् ।**
**मानुष्येऽपि च खण्डे निर्ऋतिपदं वेश्मयोग्यमेव भवेत् ॥ ७ ॥**

अथवेत्यादि । अस्यायमभिप्रायः — उक्तेनैव प्रकारेण कल्पितेषु देवादिषु चतुर्षु खण्डेषु प्रत्येकं प्रागुदग्रं सूत्रद्वयमास्फालयेत् । एवं कृते तत्क्षेत्रं षोडशकोष्ठकं भवति । तत्र गृहनिवेशनार्हयोश्चतुश्चतुष्पदात्मकयोर्मानुषदैवखण्डयोरयुक्तदिशा निर्ऋतिपदाश्रितं दैवखण्डम्, ईशानपदा-

श्रितं मानुपखण्डमिति प्रत्येकं खण्डद्वयं सम्पद्यते । एवं चेह मानुषे मानुषं दैवमिति, दैवे मानुषं दैवमिति च चत्वारि गृहस्थानान्युत्तमोत्तमानि सम्भवन्तीति । स्फुटप्रतीतये तद्विन्यासः प्रदर्श्यते —

अथ श्लोकस्थपदानि विव्रियन्ते — **नैर्ऋतनिर्ऋताविति** । निर्ऋतिभागस्थे दैवाख्ये चतुष्पदात्मके खण्डे निर्ऋतिपदं दैवाख्यं भवति । तत्र मन्दिरं कुर्यादित्यर्थः । अथ च तत्रैव खण्डे ईशपदं मानुषाख्यं भवति । तत्र वा गृहं कुर्यादित्याह — **निर्ऋतावैश** इति । एवं चतुर्षु खण्डेषु ईशभागस्थमानुषखण्डेऽपि चतुष्पदात्मके पूर्वोक्तप्रकारेण निर्ऋतिपदं दैवाख्यम्, ईशपदं मानुषाख्यं च स्तः । तयोर्वा गृहं निवेशयेदित्याह — मानुष्येऽपि च खण्डे निर्ऋतिपदम्, ईशेशानं च तदुत्तमं वेश्मयोग्यमेव स्थानं भवेदिति । ईशेशानमित्यत्र ईशपदेनापि मानुषखण्डार्थविवरणमेव कृतं वेदितव्यम् ॥ ६, ७ ॥

इह मानुष्यादिपदेन यद्यद् भाव्यमित्येतद् ग्रन्थकार एवाह —

मानुष्यं तत् प्रोक्तं यत्र चतुष्कं पदं भवेदीशे ।
नैर्ऋतकोणचतुष्कं दैविकमुदितं चतुष्पदं खण्डम् ॥ ८ ॥

वायौ कीर्तितमासुरमिति यमखण्डं(च) वह्निकोणपदम् ।
निन्द्यावासुरयाम्यौ सङ्ग्राह्यौ दैवमानुषौ खण्डौ ॥ ९ ॥

**मानुष्यं तदित्यादि** । **निन्द्यावासुरयाम्यौ** इति । चन्द्रिकायां तु "वायव्यमप्यासुरसंज्ञितत्वान्निन्द्यं विशां क्वापि च गृह्यते तत्" इति दृश्यते । शेषं स्पष्टम् ॥ ८,९ ॥

तत्र चतुष्षष्टिर्वाप्येकाशीतिस्तु वाथ पदशतकम् ।
तेषु च यत्र रुचिः स्यात् तेन च कुर्याद्गृहालयं प्राज्ञः ॥१०॥

अथैवं कल्पितेषु गृहस्थानेषु,
"विभागपदहीनेषु रूपस्थानेषु वास्तुषु ।
यक्षमातृक्रियायेषु रोगान्मृत्युर्न संशयः ॥"

इत्यभियुक्तोक्त्या गृहनिर्मितौ पदविभागस्यावश्यकतया तदर्थमिह निर्दिष्टेषु चतुष्षष्टिपदादिषु त्रिषु वास्तुषु यथारुच्यन्यतमो ग्राह्य इत्याह —

तत्रेत्यादि। चतुष्षष्टिपदः, एकाशीतिपदश्च वास्तुः स्फुटतरं पूर्वं प्रकटितः। शतपदवास्तुस्तु प्रसवत्त्वभावात् तत्रानुक्त इह ग्रन्थान्तरोक्तदिशा प्रदर्श्यते —

"चतुरश्रीकृते क्षेत्रे दशधा प्रविभाजिते।
भवेच्छतपदो वास्तुर्भूमोऽत्राप्यमरस्थितिम् ॥
द्विरष्टगुणितं मध्ये पदमेकं पितामहः।
भुङ्क्ते शतपदे वास्तौ चतुर्गुणितमर्यमा ॥
विवस्वतोऽथ मित्रस्य तद्वच्च पृथिवीभृतः।
भोगमिच्छन्ति वै तेषामर्यम्ण इव सूरयः ॥
सावित्राद्यापवत्सान्ता ये च नोक्ताः सुरोत्तमाः।
यथैकाशीतिके तद्वत् तेषां भोगः पदाष्टकम् ॥
अग्न्यन्तरिक्षपवना मृगश्च पितरोऽपि च ॥
रोगो दितिस्तथाध्यर्धपदभाजो बहिः स्थिताः।
चतुर्विंशतिरुक्ता ये पर्जन्याद्याः सुरोत्तमाः ॥
अदित्यन्ता द्विपदिकास्ते शेषं प्राक् प्रसाधितम्।"

इति ॥ १० ॥

अथ बाह्यसीमावृतिकल्पनमाह —

**वृतिपादस्य तु बहलं कुर्याद् विस्तारबाह्यतः पश्चात्।**
**सौत्रं बहलार्धं यत् तावद्बहलं च कारयेत् तलिपम् ॥ ११ ॥**

वृतिपादस्येत्यादि। बाह्यविस्तृत्यवसाने सीमावृतिः कल्प्यते। अतस्तत्स्तम्भबाहल्यं विस्ताराद् बहिरेव स्यादित्यर्थः। तस्य च स्तम्भस्य बाहल्यविधिमाह — सौत्रमित्यादि। अयमर्थः —

'क्षेत्रस्यैशादिखण्डे नवकृतिपदसम्भिन्नवास्त्वङ्गकोष्ठे —
प्येकस्यार्काशतः स्याद् विततिरिह महासूत्ररज्ज्वोः प्रसिद्धा।
तत्तद्दिग्वर्गकोष्ठेविहितशतपदेष्वेककोष्ठेभभागो
विस्तारं सूत्ररज्ज्वोरदिकृतिपदभिन्नेष्वथैकाष्टिभागः ॥'

इति यद् ग्रन्थान्तरेषु तत्तद्वास्तुषु सूत्रविस्तारमानं प्रदर्शितं, ततोऽर्धं तत्तत्सीमावृतिस्तम्भस्य बाहल्यम् अर्थाद् विस्तारं कल्पयेदिति। तलिपः स्तम्भपर्याय इति पूर्वं प्रकटितम् ॥ ११ ॥

सीमाकल्पनसाधनान्याह —

तत्र च वप्रं कुर्यात् तुर्यंश्रं द्वारगेहसद्दशमपि ।
यद्वा परिखं कुर्यात् पाषाणैर्वद्धभित्तिसमचतुरम् ॥ १२ ॥

कण्टकशाखाभिर्वा वृतिमथ करभेक्षणाक्षमां कुर्यात् ।
उत्तममत्र च वप्रं मध्यममुदितं तथैव परिखमपि ॥ १३ ॥

अधमं शाखावरणं कुर्यादेष्वेकमर्थसुलभवशात् ।
आवृत्यन्तर्भागे दिक्षु च वृक्षान् समादधेत् प्राज्ञः ॥ १४ ॥

तत्रेत्यादि । अस्यायमर्थः — सीमा हि पक्वेष्टकादिभिर्दृढतरं वद्धया भित्त्या, भित्त्युपश्लिष्टेन खातेन, कण्टकशाखावरणेन वा कर्तुं शक्यते । तत्र भित्त्यादयो यथाक्रममुत्तममध्यमाधमा वृतयो भवन्ति । तासु धनस्थित्यनुसारेणान्यतमां स्वीकुर्यादिति । तथाच चन्द्रिकायां—

"दण्डान्तं समतीत्य वप्रमुदितं मृद्भिः शिलाद्यैस्तथा
श्रेष्ठं तत् परिखा तु मध्यममते शाखावृतिश्चाधमम् ।"

इति । वप्रः चयः । चयशब्दस्य च भित्तिपर्यायता शिल्पशास्त्रेषु बहुत्र दृष्टा । द्वारगेहसदृशमिति वप्रनिर्माणविधिप्रदर्शनपरं विशेषणम् । तथा करभेक्षणाक्षमामिति च कण्टकशाखावृतेः । करभः उष्ट्रशिशुः । परिखैव लिङ्गान्तरेण परिखशब्देनोच्यते, लोकाश्रयत्वाल्लिङ्गस्य । अन्यथा वा पाठः कल्प्यः । पलिघपाठे पलिघो लोहवद्धलगुडविशेषो ग्राह्यः । अथ गृहपरिसरप्रदेशस्य विनियोगं दर्शयति — आवृत्यन्तरित्यादि । समादधेदिति । समादध्यादित्यर्थः । इह दधधातुर्भौवादिकः । आत्मनेपदस्यानित्यत्वात् परस्मैपदम् ॥ १२—१४ ॥

'दिक्षु च वृक्षान् समादधेत्' इत्युक्तम् । के ते वृक्षाः । कस्यां कस्यां दिशि समादध्यादित्यत्राह—

पनसः प्राच्यां श्रेष्ठः क्रमुको याम्येऽथ पश्चिमे केरः ।
सोमे भूतो धन्यो नागस्तत्रैव केसरः प्राच्याम् ॥ १५ ॥

तिन्त्रिण्युदिता याम्ये छत्री श्रेष्ठोऽथ पश्चिमे कथितः ।
अन्तःसारा वृक्षा यदि सन्ति ह्यन्तरेव सन्तु च ते ॥ १६ ॥
ये सन्ति त्वचिसारास्तेऽपि च सन्त्वेव सर्वतो बाह्ये ।
सकलः सारो येषां ते वृक्षाः सर्वदिक्षु युज्यन्ताम् ॥ १७ ॥

**पनस** इत्यादि । केरः नालिकेरवृक्षः । छत्री तालविशेषः । **अन्तस्सारा** इत्यादि । अयमभिप्रायः — वृक्षाः खलु अन्तःसाराः, बहिस्साराः, उभयतः साराः, उभयतो निस्सारा इति चतुर्विधाः । तेषु अन्तःसाराः पनसादयः, बहिस्साराः तालकेरप्रभृतयः, उभयतः साराः चिञ्चादयः, उभयतो निस्साराः शिग्रुसप्तच्छदप्रभृतयश्च भवन्ति । एषु अन्तःसाराः आराममध्यभागे योज्याः, ततो बाह्ये यथायथं बहिःसाराः सर्वसाराश्च योज्या इति ॥ १५ — १७ ॥

अत्र वर्ज्यान् वृक्षानाह—

वृक्षा निस्सारा ये तेषां क्षेत्रेषु वर्तनं नेष्टम् ।
जातीनागलताद्या लतिका रम्भाश्च सर्वतः शस्ताः ॥ १८ ॥

**वृक्षा निस्सारा** इत्यादि । निस्साराः अन्तस्त्वचि च । केचित्तु निस्साराणामन्तर्वर्तनमेव नेच्छन्ति । सर्वत्र वर्ज्यानुक्त्वा सर्वत्र शस्तानाह— **जातीत्यादि । रम्भाश्च सर्वतः शस्ता** इति । ग्रन्थान्तरे तु —

> "बदरी कदली चैव डाडिमी बीजपूरिका ।
> प्ररोहन्ति गृहे यत्र तद् गृहं न प्ररोहति ॥"

इत्युक्तम् । क्वचिन्मातृकायां 'जाती'त्यादिकं श्लोकार्धं न दृश्यते मन्दिरपार्श्वे स्थापनीयान् वृक्षानधिकृत्यापर एवमाह —

> "स्थाप्या मन्दिरपार्श्वपृष्ठादिशि तु श्रीवृक्षबिल्वाभया-
> व्याधिघ्नामलकीसुरद्रुमपलाशाशोकमालेयकाः ।
> पुन्नागासनचम्पकाश्च खदिरस्तद्वत् कदल्यादयो
> जातीनागलतादयोऽपि सकलाः सर्वत्र संशोभनाः ॥"

इति ॥ १८ ॥

हाटकतरुरपि नेष्टो मन्दिरसविधेष्वितीरितं यस्मात् ।
तस्मात् सर्वे वृक्षाः सर्वदिगन्तेऽविनिन्दितास्ते स्युः ॥ १९॥

हाटकतरुरपि नेष्ट इत्यादि। अस्यायमर्थः— कश्चिद्वृक्षः सुवर्णमयोऽपि सन् कालान्तरे पातादिना गृहोपघातमुत्पादयेदिति गृहपरिसरे वर्जनीयत्वेन पुरातनैः कथितः । का कथा वृक्षान्तराणामिति । शेषं सष्टम् ॥ १९ ॥

अथावृतिप्रसङ्गात् तत्रस्थद्वारविन्यासविधिमाह—

द्वारं यत्र च विहितं तद्दिगधीशाधिपं भवेद् धाम ।
एकतलं वा द्वितलं द्वितले द्विमुखं च निर्मुखं वा स्यात् ॥ २०॥

द्वारमित्यादि। अनेनेदमुक्तं भवति— अग्रद्वारं यदभिमुखं विहितं तद्दिग्योनिकमेव तत् कर्तव्यम् । तच्च द्वारं द्वारगृहं वा एकभूमिकं द्विभूमिकं वा यथेच्छं गृहप्रमाणानुरोधेन कारयेत् । यदि तद् द्वितलं क्रियेत, तदा द्वितीये तले उभयोर्भागयोर्द्वारमस्तु वा मा वा, न तत्र कश्चिन्निर्बन्ध इति। एतच्चैकतलद्वितलद्वारविधानं सर्ववर्णसाधारण्येनोक्तम्। अन्ये च सप्तभूमिकान्ता द्वारगेहविधयस्तद्विनियोगाश्च मयमतादिषूक्ताः। इह धामशब्देन द्वारगेहमेव विवक्षितमिति प्रकरणाद् विज्ञायते ॥ २० ॥

द्वारस्तम्भन्यासस्थानादिकमाह

द्वारस्तम्भन्यासो जन्मनि तस्योदितश्च शिल्पिवरैः ।
आजन्मान्तं निम्नं मार्गं तद्वारतारसदृशमपि ॥ २१ ॥

द्वारस्तम्भन्यास इत्यादि। अस्यार्थः — कवाटं यस्मिन् स्तम्भे युज्यते स द्वारस्तम्भः । तस्य न्यासः प्रतिष्ठा जन्मनि अधिष्ठानाङ्गभूतायां पादुकायामुदितो वेदितव्यः। स्तम्भो यथा पादुकोपरि संश्लिष्टः स्यात्, अधोभागस्थिता च तच्छिखा यथा पादुकान्तः सम्यक् प्रविशेत् तथा तन्न्यासः कार्य इति। तस्य चाह्यसीमावरणस्य। येयं द्वारस्तम्भाधिष्ठानभूता पादुकोक्ता तदन्तावधि द्वारस्तम्भात् किञ्चिन्निम्नमेव सन्तं द्वारमार्गं कुर्यादित्याह— आजन्मान्तं निम्नं मार्गमिति । तथाविधस्य

मार्गस्य विस्तारमाह— **तद्द्वारतारसदृशमपीति** । अपिशब्दाद् मार्गविस्तारस्य द्वारताराद्‌धिक्यमपि न दोषायेति सूचयति । एवञ्च मार्गविस्तारः द्वारतारेण तुल्यः, तस्मादधिकश्चेति द्विप्रकारः । ततो न्यूनस्तु सर्वथा न कार्य इति फलति । इदं च मार्गविधानं द्वारगेहकरणे सम्भवति । द्वारमात्रकरणे तु विशिष्य मार्गविधानमपि नावश्यकमिति ज्ञेयम् ॥ २१ ॥

अथामुमेव मार्गविधिमङ्गणद्वारमार्गेऽप्यतिदिशति—

अजिरद्वारेऽप्येवं मार्गं कर्तव्यमाहुराचार्याः ।

अङ्घ्रिगुणीकृततारे योनिः स्वीया भवेद् यथा तस्य ॥ २२ ॥

एतद्वर्त्मनि तारं किष्कुमितं वा भवेच्च मात्रमितम् ॥ २२३ ॥

**अजिरे**त्यादि । मार्गम् अर्थाद् मार्गविस्तारम् । उभयोरनियोर्मार्गविस्तारयो स्वरूपमाह - **अङ्घ्री**त्यादिनार्धेन । अयमर्थः— कल्पयितव्योऽयं मार्गविस्तारस्तथा भवेत्, यथा तस्मिन् अङ्घ्रिभिः चतुर्भिर्गुणिते स्वदिग्योनियुक्त स सम्पद्येत । ततश्च प्राग्द्वारस्य मार्गविस्तारः ध्वजयोनिः स्यात् । एवमन्यास्वपि दिक्ष्विति । तत्तद्दिग्योनय उपरिष्टात् प्रदर्शयिष्यन्ते । **एतद्वर्त्मनि तारा**मिति । 'एतन्मण्डपतारमि'ति शिल्परत्नपाठः । तत्पक्षे मण्डपशब्दस्य द्वारगेहमर्थः । अस्यां स्वदिग्योनियुक्तविस्तारकल्पनायां मानसाधनमाह— **किष्कुमिता**मित्यादि । किष्कोर्मात्रस्य चाङ्गुलिसङ्ख्या प्रथमाध्याये उक्ता । क्वचित्तु मातृकायामेतच्छ्लोकानन्तरं 'स्वदिगधिनाथे द्वारे मार्गेऽपि तथैव वा ततिं कुर्याद्' इत्यर्धमधिकं लिखितम् । तद् गतार्थमिति उपेक्षितमस्माभिः । द्वारलक्षणगता विशेषास्तु चतुर्दशाध्याये वक्ष्यन्ते ॥ २२, २२३ ॥

इति वास्तुविद्यालघुविवृतौ वेदीसंस्थानं नाम
पञ्चमोऽध्यायः ।

## अथ अङ्कणलक्षणादिकं नाम षष्ठोऽध्यायः ।

*अथ सीमावृत्तिकल्पनप्रसङ्गादन्तस्तदनुबद्धस्य गृहपरिसरस्याङ्कणाख्यस्य* मानं प्रदर्शयति—

अथातः संप्रवक्ष्येऽहमङ्कणस्य तु लक्षणम् ।
अङ्कणं ध्वजयोनि स्यान्मुखायामाभिसंयुतम् ॥ १ ॥

अथात इत्यादि । अङ्कणस्येति । णत्वं पृषोदरादित्वात् साध्यम् । ध्वजयोनीति । ध्वजादयो ह्यष्टौ वास्तुदिग्देवता इति अष्टमाध्याये वक्ष्यति । दिग्विदिग्गृहेष्वायवृद्धिसम्पादनार्थमेते शिल्पशास्त्रेषु कल्प्यन्ते । तत्तदायसङ्ख्यास्तदानयनप्रकारादीनि च ग्रन्थकार एव स्फुटीकरिष्यति । सामान्यतस्तु —

"दैर्घ्यं हन्यात् पृथुत्वेन हरेद् भागं ततोऽष्टभिः ।
यच्छेषमायं तद्विद्याच्छास्त्रदृष्टं ध्वजादिकम् ॥"

"गृहान्तरादिशां मान सङ्गुण्य च परस्परम् ।
वसुभिर्भागमाहृत्य शिष्टं वास्तुनरं वदेत् ॥"

"बाह्वोः प्रबाह्वोः संयोगदलमन्योन्यताडितम् ।
वसुभक्तं ततः शेषं सेव्यं वास्तुनरं वदेत् ॥"

"इष्टातानवितानमाननिचये त्रिघ्नेऽष्टभिर्भाजिते
शेषो योनिः ... .... . . .... ।"

इत्यादिग्रन्थान्तरवचनात् तदानयनप्रकारो ज्ञातव्यः । तथाच यादृशदैर्घ्यविस्तृतिविधानात् एकावशेषात्मको ध्वजयोनिः साधयितुं शक्येत, तादृशदैर्घ्यविस्तारकल्पनमिहाङ्कणस्येष्टमित्युपदिष्टं भवति । **मुखायामाभिसंयुतमिति** । मुखायामो दक्षिणोत्तरदैर्घ्यमिति साम्प्रदायिकाः । तादृशायामप्रमाणं च 'तत्त्वार्केन्दु' इत्यादिश्लोकेन समनन्तरमेव प्रकटयिष्यति । 'मुखायामादिसंयुतमि'ति पाठान्तरम् ॥ १ ॥

अङ्गणस्वरूपं निर्दिशति —

पादुकानां बहिर्भागमङ्गणं तद् विदुर्बुधाः ।
ध्वजः सर्वत्र संपन्न इति शास्त्रनिदर्शनम् ॥ २ ॥

**पादुकानामित्यादि** । पादुका अधिष्ठानावयवः । चतुर्दिगपेक्षया चतुर्दिग्गृहापेक्षया वेह बहुवचनं प्रयुक्तम् । प्राचि निहितस्यापि ध्वजस्य सर्वदिक्ष्वपि योज्यत्वं मनसि निधायाह — **ध्वजः सर्वत्र सम्पन्न इति** । एतदेवाह **चन्द्रिकायां**—

"केतुयोनिरभिवाञ्छितार्थदः सात्त्विकोऽमरगुरुर्द्विजो भवेत् ।
पूर्वदिक्ष्वभिहितोऽपि सर्वदा सर्वदिक्ष्वपि हितो विशेषतः ॥"

इति ॥ २ ॥

अथ मुखायाममाह—

तत्त्वार्केन्दुवसुद्वारवेश्मकृत्यब्धिसागराः ।
यथायोग्यं च कर्तव्यमजिरस्यायतं तथा ॥ ३ ॥

**तत्त्वार्केत्यादि** । तत्त्वादय क्रमेण २४, १२, १, ८, ९, १६, २, ४ सङ्ख्यावाचका भवन्ति । वेश्मकृतिरित्येका सङ्ख्या । कृतिर्वर्गः । पूर्वपश्चिमाङ्गणदैर्घ्याद् दक्षिणोत्तराङ्गणदैर्घ्यमुक्तासु सङ्ख्यास्वन्यतमया यथायोग्यमधिकं भवेदिति तात्पर्यम् ॥ ३ ॥

अथ दिग्गृहेषु कर्तव्येषु अङ्गणमध्यसूत्राणां दिग्गृहमध्यसूत्राणां च परस्परं वेधः परिहरणीय इत्याह—

वेधं तु गृहमध्यानां गोत्रनाशकरं त्यजेत् ।
प्रादक्षिण्यात् स्वया गत्या महादिग्गतवेश्मसु ॥ ४ ॥
परिहर्तव्य एवायं बुद्धिकौशलशालिभिः ।
कर्णसूत्रयुतिर्मध्ये न भवेत् कर्णवेश्मनाम् ॥ ५ ॥
अशुभाय भवत्येषा परिहार्या स्वदीर्घतः ।
रुद्ररन्ध्राद्रिबाणाश्च गत्यङ्गुल्यः क्रमात् स्मृताः ॥ ६ ॥

वेधं तु इत्यादि । अयमत्राभिप्रायः — एकस्मिन्नेव वास्तुकोष्ठे दिग्विदिग्गृहेषु कर्तव्यतया प्रसक्तेषु तेषां पादुकाबहिर्भागात्मको योऽयमङ्गणशब्दव्यपदेश्य- प्रदेशः, तत्र प्राक्प्रतीच्यायता दक्षिणोत्तरायता च निवेशिता मध्यरेखा तथा प्रसारितं मध्यसूत्रं वा अङ्गणमध्यसूत्रमिति व्यपदिश्यते । एवं तत्तद्दिग्गृहेष्वपि पृथक् पृथक् निवेशितानां मध्यरेखाणां मध्यसूत्राणां वा गृहमध्यसूत्रमिति व्यपदेशः कृतः । उभयविधयोरनयोर्मध्यसूत्रयोर्वेधं परिहरेत् । परिहरणप्रकारश्चेत्थं— प्राग्गृहस्य मध्यसूत्रं स्वस्थानादेकादशाङ्गुलं यावद् दक्षिणभागे गमयेत् । दक्षिणगृहस्य मध्यसूत्रं स्वस्थानाद् नवाङ्गुलपर्यन्तं पश्चिमतो गमयेत् । एवं पश्चिमगृहस्य उत्तरगृहस्य च मध्यसूत्रं स्वस्वस्थानाद् यथाक्रमं सप्ताङ्गुलं पञ्चाङ्गुलं च यावत् क्रमेण उत्तरतः प्राच्यां च गमयेत् । तथा अस्मिन्नेव कोष्ठे निर्ऋतिकर्णात् ईशकर्णान्तं प्रसारितेन कर्णसूत्रेण कर्णगृहमध्यसूत्रस्य वेधो यथा न भवेत्, तथा तन्निवेशनीयमिति । सुग्रहायास्य विन्यासः प्रदर्श्यते —

यथोक्तवेधपरिहारादि च बहुगृहनिर्माणपरिचयोपस्कृतया प्रतिभयैव ज्ञातुं शक्यमित्यभिप्रायेणाह — बुद्धिकौशलशालिभिरिति । महादिशः पूर्वादयश्चतस्रः । स्वदीर्घेण इति । अङ्गणमुखायामेनेत्यर्थः । रुद्ररन्ध्राद्रीत्याद्यर्धं गतिप्रमाणप्रदर्शनपरं वाक्यम् । तत्र रुद्रा एकादश । रन्ध्राणि नव । अद्रयः सप्त । बाणाः पञ्च । क्रमात्, पूर्वादितः । इहादितः षड्भिः श्लोकैर्यदुक्तं तद् विवरणभङ्ग्या सङ्गृह्णाति चन्द्रिकाकारः—

"प्राहुर्गेहचतुष्कपादुकबहिर्भागं बुधाः प्राङ्गणं
याम्योदग्विहितायतं च चतुरश्रं केतुयोन्यन्वितम् ।
भूम्यश्व्यम्बुधिनागरन्ध्रदिननाथाष्टद्विसङ्ख्याङ्गुलै-
रेकद्वित्रिकरैस्तथैव गुणविस्तारादिभिर्योयविः ॥

१ निर्ऋतिखण्डे ईशखण्डे च परं गृहानिवेशनस्योक्तत्वात्, 'निर्ऋतीशगतं कर्णसूत्रं वाप्यविनिम स्मृतिं" इति वचनान्तरेण वाय्वग्निगतकर्णसूत्रस्य वर्जनीयत्वकथनाच्च निर्ऋतीशगतमेवेह ग्राह्यमिति बोध्यम् ।

सूत्रैः प्राङ्गणगेहमध्यविहितैरन्योन्यविद्धैर्भवेत्
तद्गेहस्थितपुत्रपौत्रविलयस्तस्माद् गृहाणां क्रमात् ।
कर्तव्यं गमनं प्रदक्षिणतया प्रागादितो वह्निर-
न्ध्राद्रीष्वङ्गुलकैः स्वयोनिजनकैरावश्यके वा यवैः ॥"

इति । अत्र वह्निरन्ध्रे'ति स्थाने प्रकृतग्रन्थानुरोधेन 'रुद्ररन्ध्रे'ति पठनीयं भाति ॥ ४–६ ॥

अथ स्तम्भभित्त्यादिषु सूत्रवेधपरिहाराय तत्तत्पदेषु सूत्रमानं दर्शयति—

पदस्य गृहकृत्यंशः सूत्रं स्याद् वेदपष्टिके ।
एकाशीतिपदेऽर्कांशो वस्वंशः शतके पदे ॥ ७ ॥

सूत्रवेधं तु सर्वेषां स्तम्भमध्यादिषु त्यजेत् ।

पदस्येत्यादि । वेदपष्टिकं चतुष्षष्टिपदम् । गृहकृत्यंशः षोडशांशः । अर्कांशः द्वादशांशः । वस्वंशः अष्टांशः । शेषं स्पष्टम् । चतुष्षष्टिपदादिषु त्रिषूक्तेषु कोष्ठेष्वेकैकस्मिन् पदे यथाक्रमं षोडशाद्यंशः स्तम्भादिनिवेशनेषु वर्ज्यो सूत्रविततिरित्यर्थः । एवं च वेधपरिहाराय तत्तत्पदेषूक्तं तत्तत्सूत्रविस्तारांशं प्राग्वोदग्वा परित्यज्य स्तम्भादीनां निवेशने वेधदोषो न स्यादित्यर्थसिद्धम् ॥ ७, ७½ ॥

सूत्रवेधो यथा वर्ज्यः तथा तद्विशेषभूतानि मर्मादीन्यपि वर्जनीयानीत्याह—

मर्मादीनि निषिद्धानि वास्तुकर्मण्यनेकधा ॥ ८ ॥

सन्ति संक्षेपतस्तानि द्विधा वक्ष्यामि सांप्रतम् ।
तान्यपि स्तम्भकुड्यादौ वर्जनीयानि यत्नतः ॥ ९ ॥

मर्मादीनीत्यादि । अत्रादिपदेन वंशानुवंशसन्ध्यनुसन्धिमहावंशा आद्याः ।

"द्विरेखासङ्गमस्थानं सन्धिरित्यभिधीयते ।
त्रिरेखासङ्गमस्थानं मर्म मर्मविदो विदुः ॥"

इति मर्मसन्ध्योः सामान्यलक्षणम् । विशेषस्तूपरि वक्ष्यते ॥ ८, ९ ॥

अथ वास्तुशरीरगतानां मर्मादीनां स्वरूपादिकं प्रस्तौति — नाड्य-इत्यादिभिरष्टभिः श्लोकैः —

नाड्यः स्युर्दश पूर्वसौम्यगमिता वास्तुस्थिताः कल्पिते-
-ष्वेकाशीतिपदेषु कर्णनिहिते ताभिश्च सूत्रे लिखेत् ।
अत्राङ्गाग्निपदस्थिताश्च परितस्तत्पार्श्वयो रज्जवो
मर्मादीनि विभज्य वच्मि बहुधा तन्नाडिकारज्जुभिः ॥ १० ॥

धर्मा यशोवती भद्रा शुभदा कामदा शुभा ।
चित्रा सौम्या सुधा गौरी नाड्यः प्रागानना दश ॥ ११ ॥

*अमृता वारुणी शान्ता ह्लादिनी ब्रह्मवादिनी ।
मनोरमा रतिः कान्ता ज्वालिनी चोत्तरानना: ॥ १२ ॥

अष्टाभिः सङ्गतिर्यत्र नाडीरज्जुविमिश्रितैः ।
सूत्रैस्तत्र महामर्म ब्रह्मस्थानस्य कोणतः ॥ १३ ॥

प्रत्येकं दिक्षु षट्कानि त्रिकाणां सन्ति पार्श्वतः ।
नाडीद्वयसमायोगादुपमर्माणि तानि तु ॥ १४ ॥

चतुर्विंशच्चतुष्काणि नाडीमर्माणि सन्ति च ।
रज्जुमर्माणि रज्जुभ्यां चतुष्कं नवकं भवेत् ॥ १५ ॥

कोणस्थमुपमर्मान्तं त्रिकं बाह्ये विनिर्दिशेत् ।
षट्कं च मर्मसम्भेदं कृतिं षण्णां वदन्ति च ॥ १६ ॥

---

* अस्मिन् पाठे नामक्रमसद्ग्रहीतं प्रतिभाति ।

पञ्चकं मर्मसन्धिश्च द्वे द्वे दिक्षु* चतुर्ष्वपि ।
पदमध्यस्थितं मर्म रज्जुभ्यां दोषवर्जितम् ॥ १७ ॥

अयमत्र निष्कर्षः — एकाशीतिपदनिष्पादनाय या दश दश रेखाः प्रागानना उदगाननाश्च लिख्यन्ते, तासां यथाक्रमं धर्मादयोऽमृतादयश्च संज्ञाः शिल्पशास्त्रेषु प्रसिद्धाः । ताश्च विंशती रेखा नाड्य इति परिभाषिताः । एवं विंशत्या नाडीभिर्निष्पादिते तस्मिन्नेकाशीतिपदवास्तौ ईशकोणान्निर्ऋतिकोणान्तम् अग्निकोणाद्वायुकोणान्तं चैकैकां रेखां विलिखेत् । अथैतयोः कोणरेखयोरुभयपार्श्वे षड्भिः पदैरेकैका, त्रिभिः पदैरेकैकेति प्रत्येकं चतस्रश्चतस्रो रेखाः विलिखेत् । आसामष्टानां रेखाणां कोणसूत्रयोश्च प्रत्येकं रज्जुरिति संज्ञा कृता । एवमुक्तेषु सूत्रेष्वास्फालितेषु स वास्तुर्दशभी रज्जुभिर्विंशत्या नाडीभिश्च मिश्रितो भवति । अत्रैतासु नाडीनां रज्जूनां च यत्र यत्र मेलनं भवति तत्तन्मर्मस्थानमित्युच्यते । मर्मस्थानभूता नाडीरज्जुसन्धयश्च बहुधा भवन्ति, क्वचिद् द्वयोः, क्वचित् त्रयाणां, क्वचित् चतुर्णां, क्वचित् पञ्चानां, क्वचित् षण्णां, क्वचिदष्टानां च नाडीरज्जुसूत्राणां व्यस्तैः समस्तैश्च मिथो योगस्य सम्भवात् । तत्राष्टानां तत्सूत्राणां सन्धिर्महामर्मेति कथ्यते । ते च सन्धयः एकाशीतिपदे चत्वारो भवन्ति । तेषां स्थानानि नवपदात्मकस्य ब्रह्मस्थानस्य चत्वारः कोणाः । षण्णां योगेन निष्पन्नाः सन्धयः षट्त्रिंशत् । तत्स्थानानि बाह्यतो द्वितीयायामवृत्त्यां चतुर्विंशतिपदात्मिकायां स्थितेषु मध्ये चतुःसूत्रयोगिष्वष्टसु पदेषु, तादृशे सर्वकोष्ठमध्यपदे च प्रत्येकं स्थिताश्चत्वारः कोणाः । पञ्चानां सन्धयः प्रतिदिशं द्वौ द्वावित्यष्टौ । तेषां स्थानानि वास्तुप्रान्ते द्वयोर्द्वयोः कोणाधिपयोरन्तराले यत्र यत्र रज्जुद्वयं लगति तत्र तत्र भवन्ति । चतुर्णां सन्धयस्तु नाडीनामेव स्युः । ते च प्रतिदिशं षडिति चतुर्विंशतिः । तत्स्थानानि च रज्जुकर्णसूत्रेभ्यो विविक्तान्येव वर्तन्ते । तान्येवेहोपमर्माणीति निर्दिश्यन्ते । त्रयाणां सन्धयो वास्तुकोणेषु चतुर्षु स्थिता एव । उक्तरीत्या हि द्वयोः सन्धिरसम्भवीति नात्र परिगण्यते । रज्जुद्वययोगेन पदमध्ये निष्पन्नाः सन्धयस्त्वदुष्टा इति । उक्तविधया यद्यपि वास्तुप्रान्तेष्वन्येऽपि त्रिसूत्रसन्धयः

* 'चतसृषु' इति स्यात् ।

प्रतिदिशं षट् षट् सम्भवन्ति। अत एव **चन्द्रिकाकारः**—"सूत्रैर्योग-समुद्भवानि तु शतं वर्ज्यानि कुड्यादिषु" इति शतं सन्धीनाह, तथापि ते ग्रन्थे न गणिता इत्यस्माभिरपि त्रिसूत्रसन्धौ न निरूपिताः। एषां सुग्रहाय विन्यासः प्रदर्श्यते—

अथ पदार्था विवियन्ते—**नाड्य** इत्यादि। अङ्गानि षट्। अग्र-यन्त्रयः। तत्पार्श्वयोः कर्णसूत्रपार्श्वयोः। **रज्जव** इति। कोणरेखे द्वे, तदुभयतः स्थिता रेखा अष्टावित्याहत्य दश रेखा रज्जुशब्देन व्यवह्रियन्ते इत्यर्थः। **धर्मेत्यादि**। **भट्टोत्पलस्त्वाह**—

"शान्ता यशोवती कान्ता विशाला प्राणवाहिनी।
सती च सुमनानन्दा सुभद्रा सुरथा तथा॥
पूर्वापरगता ह्येता उदग्यामाश्रिताः शृणु।
हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया॥
जया काला विशोका च तथेन्द्रा दशमी स्मृता।
धन्या धरा विशाला च स्थिरा रूपा गदा निशा॥
विभवा प्रभवा चान्याः सौम्ययाम्याश्रिताः सिराः॥"

इति। **अष्टाभिरित्यादि**। सूत्रचतुष्कमेव सन्धिस्थानादुभयतो गणनात् सूत्राष्टकं जातमित्याशयः। एवं सर्वत्र। **महामर्मेति**। एतच्च चतुःसंख्या-कमिति पूर्वं निरूपितम्। **प्रत्येकमिति**। **त्रिकाणां षट्कानीति**। पूर्वोक्तदिशा त्रीणि सूत्राण्येव षट्सूत्राणि भूत्वैकत्र सन्दधते, तादृशाः सन्धयो बहवः सूत्राष्टकसन्धीनामभितो वर्तन्त इत्यर्थः। तत्संख्या तु 'षट्कं च मर्मसम्भेदम्' इत्यादिना वक्ष्यते। **नाडीद्वयेत्यादि**। इदमपि पूर्ववद् व्याख्येयम्। 'नाडीद्वयसमायोगानी'ति पाठान्तरम्। **रज्जुम-र्माणीति**। पदमध्यस्थिता निर्दुष्टा रज्जुचतुष्कसन्धयो नव सन्ती-त्यर्थः। **कोणस्थमित्यादि**। बाह्ये कोणस्थं त्रिकं त्रिसूत्रसन्धिम् उपम-र्मान्तमित्याख्यया विनिर्दिशेदित्यर्थ इति साम्प्रदायिकाः। 'कोणस्तम्भक-मर्मान्तमि'ति शिल्परत्नपाठस्तु चिन्त्यः। 'उपमर्मान्तत्रिकमि'ति, 'बाह्येन निर्दिशेदि'ति च मातृकान्तरेषु पाठः। सूत्रषट्कसन्धीनां संख्यां निर्दि-शति—**षट्कमित्यादि**। कृतिर्वर्गः। षण्णां कृतिः षट्त्रिंशत्। 'कृतिः

षणां भवन्ति' इत्यपपाठः । पञ्चकमित्यादि । सूत्रपञ्चकसन्धिरित्यर्थः । चतुर्ष्विति । पुंस्त्व चिन्त्यम् । पदमध्यस्थितामिति । पदमध्यसन्धयो नवेति पूर्वमुक्तम् ॥ १०—१७ ॥

उक्तेषु मर्मस्थानेषु वास्तुपुरुषस्य मूर्धावयवेषु च स्तम्भादीनां निवेशने प्रत्येकं फलमाह —

स्थानान्येतानि वास्तोर्गृहकरणविधौ
पीडयेन्नैव विद्वान्
पीडा स्यात् पीडितेषु क्षितिपतिविषय-
ब्राह्मणानां पशूनाम् ।
तत्कर्तुः शिल्पिनां च स्वतनयवनिता-
भ्रातृसम्बन्धिनां च
यत् तस्मात् स्थानवेधे पृथगपि निहितान्
वच्मि दोषान् विभज्य ॥ १८ ॥

मूर्ध्नि वक्त्रे च कण्ठे च हृदये मरणं भवेत् ।
विद्धे चोरसि हृद्रोगः पादयोः कलहो भवेत् ॥ १९ ॥

ललाटे भ्रातृहानिः स्याद् विभ्रमोऽङ्गुलिपृष्ठयोः ।
ऊर्वोर्मृत्युश्च बन्धूनां पत्नीनाशस्तु वा भवेत् ॥ २० ॥

गुह्यस्थे सुतनाशः स्यादष्टके गर्भविच्युतिः ।
षट्के च वृद्धिः शत्रूणां चतुष्के स्वजनक्षयः ॥ २१ ॥

पञ्चके व्याधिरुद्दिष्टस्तस्करेभ्यस्त्रिके भयम् ।
वर्जयेत् कुड्यमध्ये च नाडीरज्ज्वादिसंगमम् ॥ २२ ॥

स्थानानीत्यादि । पीडयेन्नैव विद्वानिति । पीडा च स्तम्भमित्यादिनिवेशनेनेति पूर्वमुक्तम् । मूर्ध्नीत्यादि । मूर्धा ईशस्थानम् ।

चक्रमापस्थानम् । कण्ठः आपवत्सस्थानम् । हृदयं ब्रह्मस्थानम् । उरः महेन्द्रादीनां स्थानम् इत्यन्यतोऽवगम्यते । इह तु क्वचिद् विसंवादः चतुर्थाध्याये दृश्यते । पादौ पितृस्थानम् । ललाटमङ्गुलिपृष्ठं च सूत्रसन्धिस्थानम् । ऊरू यमवरुणस्थानम् । गुह्यमिन्द्रादीनां स्थानम् । विद्धम इति । वेध इति विशेष्यम् । अष्टके इति । अष्टसूत्रसन्धिवेध इत्यर्थः । एवं षट्कादिष्वपि व्याख्येयम् । 'चतुष्के स्वजनक्षय' इत्यस्य स्थाने 'चतुष्के च गजक्षय' इति पाठान्तरम् । गुह्यस्थ इति । 'गुह्ये तु' इति क्वचित् पाठः । शेषं स्पष्टम् ॥ १८–२२ ॥

अगत्या प्रमादेन वा यदि कदाचित् तैर्वेधः अन्यो वा दोषः सम्भाव्येत, तदा किं कर्तव्यम् । तत्राह—

उक्तानुक्तं च यत्किञ्चित् प्रमादाद् यदि सम्भवेत् ।
एतानि दोषशान्त्यर्थं निखनेद् वास्तुकर्मणि ॥ २३ ॥

उक्तानुक्तमित्यादि । एतानीति । समनन्तरश्लोके वक्ष्यमाणानि सिंहादिमस्तकानीत्यर्थः ॥ २३ ॥

तान्येवाह—

सिंहमातङ्गमहिषकूर्मसूकरमस्तकम् ।
शुद्धहाटकक्लृप्तं स्यात् कर्तुर्गेहस्य वृद्धिदम् ॥ २४ ॥

सिंहेत्यादि । सिंहादीनां सूकरान्तानां पञ्चानां मस्तकमित्यर्थः । तद्द्रव्यमाह—शुद्धेत्यादि । शुद्धमितरलोहासम्पृक्तम् । हाटकं स्वर्णम् । क्लृप्तं निर्मितम् । कर्तुर्गेहस्य वृद्धिदमिति । गृहकर्तुस्तद्गृहवासिनां च श्रेयःप्रदमित्यर्थः । 'कर्तुः सौख्यविवृद्धये' इति पाठान्तरम् । आभ्यां श्लोकाभ्यामिदमुक्तं भवति— पूर्वोक्तरीत्या सम्यक् परीक्ष्य स्तम्भादिनिवेशनेन निर्मितेऽपि गृहे सुसूक्ष्मा ये केचन दोषाः सम्भवेयुरित्यतो गृहकर्मण्यवश्यं लोहं सिंहादिमस्तकं निखनेत् । तच्चेत् सुवर्णमयं स्यात्, तदा तत्र केवलं ज्ञाताज्ञातदोषशान्त्यै, किन्तु सर्वार्थलाभायापि प्रकल्पत इति ॥ २४ ॥

पूर्वं मर्मस्थानानि 'संक्षेपतस्तानि द्विधा वक्ष्यामी'ति प्रतिज्ञातम् । तत्रैकाशीतिपदगतमर्मस्थाननिरूपणे एकः प्रकार उक्तः । इदानीं प्रकारान्तरं चतुष्पष्टिपदगतमर्मस्थाननिरूपणेन प्रदर्शयति—

कृत्वा चतुष्पाष्टिपदेन वास्तुं
कोणेषु सूत्रे विलिखेत् सिराख्ये ।
पूर्वाग्रसौम्याग्रगताश्च वंशा
मध्ये त्रयः कोणगता लिखेच्च(?)॥ २५ ॥

कृत्वेत्यादि । 'वक्ष्ये' इति पाठान्तरम् । कोणेषु सूत्रे विलिखेत् सिराख्ये इति । कोणसूत्रयोः सिरेति संज्ञा । तथा च सिरासंज्ञिते द्वे सूत्रे कोणेषु लिखेदित्यर्थः । एवमुत्तरत्रापि । मध्ये त्रय इत्यादि । एतत्स्थाने 'सिराख्ययोः पार्श्वगतानुवंशाः' इति शिल्परत्ने दृष्टः पाठः साधुतरः । सिराख्ययोः कोणरेखयोः पार्श्वद्वये समनन्तरश्लोकवक्ष्यमाणविधया· लिखिताश्चतस्रो रेखा अनुवंशाख्या इति तदर्थः । 'मध्ये त्रय' इत्यादिपाठस्त्वशुद्धः । कथञ्चित् क्लिष्टकल्पनया तत्समर्थनेऽपि तत्र नातीवार्थसामञ्जस्यमिति तद्विन्यासदर्शनेन स्फुटीभविष्यति ॥ २५ ॥

अथ कोणसूत्रपार्श्वगतरेखाविलेखनप्रकारमाह—

महेन्द्रधर्मेशपदप्रविष्टं
गृहक्षताप्याख्यपदप्रविष्टम् ।
पुष्पादिदन्तेन्दुपदस्थितं च
भल्लाटमित्रस्थमिमेऽनुवंशाः ॥ २६ ॥

महेन्द्रेत्यादि । अत्र द्वितीयान्तानां लिखेदिति पूर्वश्लोकस्थक्रियान्वयः । आप्याख्यो वरुणः । 'अर्ध्यांश' इति शिल्परत्नपाठः । मित्र आदित्यः । शेषं स्पष्टम् । अस्य विन्यासः —

इति ॥ २६ ॥

आसु रेखासु सन्धिस्थानादिकमाह—

तिस्रो रेखाश्चतुर्दिक्षु बाह्यस्थाः सन्धयः स्मृताः ।
मर्माणि सूत्रसन्धीनि चोपमर्म पदस्थितम् ॥ २७ ॥

पूर्वं मर्मस्थानानि 'संक्षेपतस्तानि द्विधा वक्ष्यामी'ति प्रतिज्ञातम् । तत्रैकाशीतिपदगतमर्मस्थाननिरूपणे एकः प्रकार उक्तः । इदानीं प्रकारान्तरं चतुष्षष्टिपदगतमर्मस्थाननिरूपणेन प्रदर्शयति—

कृत्वा चतुष्षष्टिपदेन वास्तुं
कोणेषु सूत्रे विलिखेत् सिराख्ये ।
पूर्वाग्रसौम्याग्रगताश्च वंशा
मध्ये त्रयः कोणगता लिखेच्च(?)॥ २५ ॥

कृत्वेत्यादि । 'वक्ष्ये' इति पाठान्तरम् । **कोणेषु सूत्रे विलिखेत् सिराख्ये** इति । कोणसूत्रयोः सिरेति संज्ञा । तथा च सिरासंज्ञिते द्वे सूत्रे कोणेषु लिखेदित्यर्थः । एवमुत्तरत्रापि । **मध्ये त्रय** इत्यादि । एतत्स्थाने 'सिराख्ययोः पार्श्वगतानुवंशाः' इति शिल्परत्ने दृष्टः पाठः साधुतरः । सिराख्ययोः कोणरेखयोः पार्श्वद्वये समनन्तरश्लोकवक्ष्यमाणविधया लिखिताश्चतस्रो रेखा अनुवंशाख्या इति तदर्थः । 'मध्ये त्रय' इत्यादिपाठस्त्वशुद्धः । कथञ्चित् क्लिष्टकल्पनया तत्समर्थनेऽपि तत्र नातीवार्थसामञ्जस्यमिति तद्विन्यासदर्शनेन स्फुटीभविष्यति ॥ २५ ॥

अथ कोणसूत्रपार्श्वगतरेखाविलेखनप्रकारमाह—

महेन्द्रधर्मेशपदप्रविष्टं
गृहक्षताप्याख्यपदप्रविष्टम् ।
पुष्पादिदन्तेन्दुपदस्थितं च
भल्लाटमित्रस्थमिमेऽनुवंशाः ॥ २६ ॥

**महेन्द्रे**त्यादि । अत्र द्वितीयान्तानां लिखेदिति पूर्वश्लोकस्थक्रियान्वयः । आप्याख्यो वरुणः । 'अब्धीश' इति शिल्परत्नपाठः । मित्र आदित्यः । शेषं स्पष्टम् । अस्य विन्यासः—

इति ॥ २६ ॥

आसु रेखासु सन्धिस्थानादिकमाह—

तिस्रो रेखाश्चतुर्दिक्षु बाह्यस्थाः सन्धयः स्मृताः ।
मर्माणि सूत्रसन्धीनि चोपमर्म पदस्थितम् ॥ २७ ॥

अनुवंशद्वयस्यापि सन्धिर्लाङ्गलमुच्यते ।
मूर्ध्नि वक्त्रे च नाभौ च महामर्म स्तने हृदि ॥ २८ ॥

सिरा इत्यादि । मूर्ध्नीत्यादि । मूर्धादिषु देवतास्थानं पूर्वमुक्तम् । नाभिः ब्रह्मस्थाम् । स्तनौ आर्यकपृथ्वीधरयोः स्थानम् । हृदीति । हृदपि ब्रह्मस्थानमेव । 'हृदि च स्वभूः' 'ब्रह्मा च नाभौ' इति द्वयोः स्मरणात् । 'स्तने मृतिः' इति क्वचित् पाठः । तत्पक्षे तत्स्थानवेधफलप्रदर्शनपरमिदं वाक्यं पूर्वस्माद् भिन्नम् । एवं वंशादिकल्पनैर्द्वितीयो मर्मस्थानप्रदर्शनप्रकारो निरूपितः । अस्यैव विवरणभङ्ग्या क्वचित् प्रकारान्तरेण च मर्मस्थानानि ग्रन्थान्तरे प्रदर्शितानि । यथा —

"सिरावंशानुवंशाश्च सन्धयः सानुसन्धयः ।
मर्माण्यथ महावंशा लक्ष्या वास्तुशरीरगाः ॥
सिराः कर्णगता याः स्युस्ता नाड्यः परिकीर्तिताः ।
पदस्य षोडशो भागस्तत्प्रमाणं प्रकीर्तितम् ।
महावंशौ प्राक्प्रतीच्यौ याम्योदीच्यौ च मध्यमौ ।
प्रमाणं पञ्चमो भागः पदस्योदाहृतं तयोः ॥
वंशास्तेऽस्मिन् समुद्दिष्टा रेखा याः स्युर्मुखायताः ।
यास्तिर्यगायता रेखास्तेऽनुवंशाः प्रकीर्तिताः ॥
सम्पाता ये स्युरेतेषां मर्म तत् सम्प्रचक्षते ।
उपमर्माणि तान्याहुः पदमध्यानि यानि च ।
भागोऽष्टमोऽथ दशमो द्वादशः षोडशोऽपि च ।
पदतो मानमिष्टं स्याद्वंशादीनामनुक्रमात् ॥
वंशाद्येकस्य यः सन्धिः स सन्धिरिति कीर्तितः ।
ये पुनः स्युस्तदङ्गानां प्रोक्तास्ते चानुसन्धयः ।
वालाग्रतुल्यं सन्धीनां प्रमाणं समुदीरितम् ।
यत्नेनैतानि सन्त्यज्य वास्तुविद्याविशारदः ॥
द्रव्याणि प्रयतो नित्यं स्थपतिर्विनिवेशयेत् ।"

इति ,

"अन्तस्त्रयोदश सुरा द्वात्रिंशद् बाह्यतश्च ये ॥
तेषां स्थानानि मर्माणि सिरा वंशाश्च तेषु तु ।
मुखे हृदि च नाभौ च मूर्ध्नि च स्तनयोस्तथा ॥
मर्माणि वास्तुपुंसोऽस्य षण् महान्ति प्रचक्षते ।
वंशानुवंशसम्पाताः पदमध्यानि यानि च ॥
देवस्थानानि तान्याद्ये पदषोडशकान्विते ।
देवस्थानानि सम्पाताश्चतुष्षष्टिपदे पुनः ॥
तथैकाशीतिपदके पदान्तशतिकेऽपि च ।
चतुर्ष्वपि विभागेषु सिरा याः स्युश्चतुर्दिशम् ॥
मर्माणि तानि चोक्तानि द्वारमध्यानि यानि च "

इति च। अन्यच्च महामर्मलक्षणं बृहत्संहितायामुक्तम्। यथा—

"रोगाद्वायुं पितृतो हुताशनं सूत्रमपि वितथात्।
मुख्याद् भृशं जयन्ताच्च भृङ्गमादितेश्च सुग्रीवम् ॥
तत्सम्पाता नव ये तान्यतिमर्माणि सम्प्रदिष्टानि ।
यश्च पदस्याष्टांशस्तत् प्रोक्तं मर्मपरिमाणम् ॥"

इत्यादि। वंशस्य सिरायाश्च परिमाणमन्यत् तत्रैवोक्तम्। यथा—

"पदहस्तसङ्ख्यया सम्मितानि वंशोऽङ्गुलानि विस्तीर्णः ।
वंशव्यासोऽध्यर्धः सिराप्रमाणं विनिर्दिष्टम् ।"

इति। अस्यार्थः—तत्तद्देवानां पदं यद्धस्तसङ्ख्यया विस्तीर्णं तत्सङ्ख्याङ्गुलानि वंशो विस्तीर्णो भवति। पदं षड्ढस्तमितं चेद् वंशः षडङ्गुलविस्तीर्णो भवतीति यावत्। तथा वंशविस्तारोऽध्यर्धः सिराप्रमाणं भवतीति। एवमन्यदप्यूह्यम् ॥ २७,२८ ॥

वेधफलमाह—

**गवां नाशः शिरोवेधे वंशवेधे मृतिर्भवेत् ।**
**प्रवासः सन्धिवेधे स्यादनुवंशे भयं भवेत् ॥ २९ ॥**

**त्रिशूले गर्भनाशः स्याल्लाङ्गले च शिरोरुजा ।**
**चतुष्के वाहनोच्छित्तिः षट्के तु बहुवैरिता ॥ ३० ॥**

स्वामिनो मरणं विद्धे महामर्मणि जायते ।
उपमर्मणि विद्धे तु भ्रातृपुत्रक्षयो भवेत् ॥ ३१ ॥
कर्तुर्वंशस्य नाशश्च मर्मवेधे ध्रुवं भवेत् ।
शास्त्रान्तरनिषिद्धांश्च दोषान् सर्वान् विवर्जयेत् ॥ ३२ ॥

**गवां नाशाइत्यादि** । त्रिशूल इति । त्रिशूलाकारे सन्धावित्यर्थः । लाङ्गले समनन्तरप्रकटिते लाङ्गलाख्ये सन्धौ । चतुष्क इति । चतुःसूत्रसन्धावित्यर्थः । एवमुत्तरत्रापि । अयमत्र वर्ज्यस्थानसङ्ग्रहोऽग्निपुराणोक्तः—

"समस्तनाडीसंयोगे महामर्मानुर्ष हलम् ।
त्रिशूलं स्वस्तिकाकारं महास्वस्तिकसम्पुटौ ॥
त्रिकटं मणिबन्धं च सुविशुद्धं पदं तथा ।
इति द्वादशमर्माणि वास्तोर्भित्यादिषु त्यजेत् ॥"

इति । **शास्त्रान्तरनिषिद्धानिति** । शास्त्रान्तरेषु बहवो दोषा निषिद्धाः । तेषु दिङ्मात्रमुदाह्रियते—

"द्वारद्रव्यतुलास्तम्भनागदन्तगवाक्षकैः ।
द्वारमध्यार्दितै रोगकुलपीडाधनक्षयाः ॥
नृपदण्डभयं पत्युः पीडनं च प्रचक्षते ।
द्वारमध्येषु षड्दारुमध्येष्वपि च सूरयः ॥
कर्णद्रव्यादिभिर्विद्धेष्वेतदेव फलं विदुः ।
शय्यानुवंशविद्धिता गृहिणां कुलनाशिनी ॥
क्षयावहा नागदन्ता भर्तुः शय्यावितानगाः ।
वातायनैरथ स्तम्भैर्ये विद्धा नागदन्तकाः ॥
ते शस्त्रभीतिदा भर्तुर्यद्वा चौर्यभयप्रदाः ।
द्रव्यधान्यविनाशाय शोकाय कलहाय च ॥
गृहमध्यगतं द्वारं भवेत् स्त्रीदूषणाय च ।"

इत्यादि । एवमन्यदपि द्रष्टव्यम् ॥ २९—३२ ॥

इति वास्तुविद्यालघुविवृतौ अङ्गलक्षणादिकं नाम षष्ठोऽध्यायः ॥

---

## अथ गृहारम्भकालनियमादिकं नाम सप्तमोऽध्यायः ।

अथ गृहारम्भकालनियमान् प्रस्तौति—

तुलावृश्चिकयोः सिंहं पश्चिमं मृगकुम्भयोः ।
गजं तु मेषवृषयोः कुर्यात् सिंहे ध्वजालयम् ॥ १ ॥

तुलावृश्चिकयोरित्यादि । सिंहमिति । सिंहयोनिकं गृहमित्यर्थः । सिंहश्च दक्षिणदिग्गृहदेवतेत्यष्टमाध्याये वक्ष्यति । ततश्चात्र सिंहशब्देन दक्षिणदिग्भवं गृहमित्युक्तं भवति । एवं ध्वजगजशब्दाभ्यामपि यथाक्रमं प्रागुदग्भवे गृहे विवक्षिते । सिंह इति । श्रावणमास इत्यर्थः ॥ १ ॥

कन्यादिमासेषूक्तगृहाणामारम्भे दोषमाह—

कन्यायां पन्नगः शेते प्राक्छिरा याम्यपुच्छकः ।
चापे याम्याशिराः प्रत्यक्पुच्छो मीने पराक्छिराः ॥ २ ॥
उदक्पुच्छोऽथ मिथुने सौम्यकेशस्तथैव च ।
प्राचीपुच्छो लुठत्येवं मासैर्द्वादशभिः क्रमात् ॥ ३ ॥

कन्यायामित्यादि । एवञ्च सति तुलावृश्चिकयोरुत्तरदिग्गृहारम्भोऽपि न दोषायेति सिध्यति । एवमन्यदप्यूह्यम् ॥ २३ ॥

स्तम्भा नहि विधातव्यास्तदङ्गेषु नृमन्दिरे ।
यदि कुर्वन्ति तत्रस्था निरयं यान्ति ते ध्रुवम् ॥ ४ ॥

स्तम्भा इत्यादि । यथाविहितेषु मासेषु तत्तद्गृहमारभ्येत तदा प्रस्तुतपन्नगावयवेषु तत्तद्गृहस्तम्भा निवेशनीयाः स्युः, तच्चानिष्टमुत्पादयतीत्यर्थः ॥ ४ ॥

दिग्गृहा नैव कर्तव्याः सूर्ये चोभयराशिगे ।
कृते तु विलयं याति सभृत्यः ससुतो गृही ॥ ५ ॥

दिग्गृहा इत्यादि । सूर्ये चोभयराशिगे इति । अयमभिप्रायः—राशयो हि चरः स्थिरः उभय इति त्रिविधाः । तेषां च यथाक्रमं

मेषादितो गणनायां मिथुनं कन्या धनुः मीन इत्येते चत्वारो राशयः उभयराशिसंज्ञका भवन्ति। तेषु सूर्ये स्थिते दिग्गृहा नारम्भणीया इति। 'नृगृहा' इति पाठान्तरम्। अत्रापि विशेषः —

"रवौ कन्यातुलालिस्थे गृहं वरुणदिङ्मुखम्।
न कुर्यात् तद्धि शून्यं स्यान्न च वृद्धिर्भवेत् प्रभोः॥
न दक्षिणमुखं कुम्भमृगधन्विस्थिते रवौ।
कुर्वीत निष्फलं तत् स्यान्नृपदण्डवधादिकृत्॥
न मीनवृषमेषस्थे कुर्वीत प्राङ्मुखं रवौ।
तद् धनघ्नं कलिक्षुद्रराजचौरार्तिकृद् यतः॥
रवौ मिथुनसिंहस्थे न कर्किस्थेऽप्युदङ्मुखम्।
कुर्यात् तद्धि दरिद्रत्वं दद्याच्चरणदासताम्॥"

इत्यादिः। पुनः कदा गृहमारम्भणीयम्, अत्राह ग्रन्थान्तरे—

"मृगे घटे स्थिते सूर्ये मेषे वृषगते तथा।
कर्किसिंहगते वापि जूकवृश्चिकगे रवौ॥
गृहारम्भः प्रशस्तः स्यात् क्रमात् प्राच्यादिदिक्ष्वपि।"

इति। गृहविशेषारम्भे तु—

"मीने धनुषि कन्यायां मिथुने च रवौ स्थिते।
उलूखलगृहं पाकगृहं पशुगृहं तथा॥
मीनाद्युभयराशिस्थे रवौ कुर्याद् विचक्षणः।
अलिप्रभृतिषड्राशिजानां प्राच्यां गृहं शुभम्॥
एवं कुर्याद् वृषात् सिंहात् षट्षड्जानां क्रमाद्दिशः।"

इत्यादिकाः,

"मेषे वृषे चान्नगृहं प्रकुर्यान्मृगेन्द्रके कर्कटके च धान्यम्।
धनं तुलायामथ वृश्चिके वा सुखालयं वै मकरे च कुम्भे॥"

इत्यादिकाश्च विषयो ज्योतिश्शास्त्रादवगन्तव्याः। गृहारम्भायुर्योगाः कालप्रकाशिकायामेवं प्रदर्शिताः—

"अथ वक्ष्ये गृहारम्भ आयुर्योगं सुखावहम्।
व्योमपातालगौ चन्द्रगुरू लाभे कुजार्कजौ॥

यस्य तस्य समाशीतियुता लक्ष्मीयुता स्थितिः ।
गुरौ लग्नेऽस्तगे सौम्ये शौर्ये मन्दे रिपौ रवौ ॥
जले शुक्रे समारब्धं जीवेद् वर्षशतं गृहम् ।
कवौ लग्ने गुरौ पुत्रे रवौ शौर्ये क्षते कुजे ।
समारब्धं गृहं जीवेद् वत्सराणां शतद्वयम् ॥
मूर्तिस्थे तु यदा चन्द्रे जीवे चास्ते बुधे खगे ।
षट्शताब्दं समृद्धाः स्युर्गृहग्रामपुरादयः ॥
शुक्रे वियति कामे ज्ञे जीवे चास्ते स्थिरे तनौ ।
षट्शताब्दं समृद्धाः स्युर्गृहग्रामपुरादयः ॥
शुक्रे वेश्मनि कामे ज्ञे जीवे स्थिरगृहे सति ।
शताष्टकं विवृद्धाः स्युर्देवगेहोपमा गृहाः ॥
सूर्योदये गुरौ चास्ते वियतीन्दुसमायुते ।
सहस्राब्दं विवृद्धाः स्युर्देवालयगृहादयः ॥
शुक्रोदये स्मरे जीवे चन्द्रे खे संस्थिते सति ।
सहस्राब्दं समृद्धाः स्युर्देवालयगृहादयः ॥
बुधोदये गुरौ चास्ते वियतीन्दुसमायुते ।
सहस्राब्दं समृद्धाः स्युर्देवालयगृहादयः ॥
जीवोदये स्मरे सौम्ये वियतीन्दुसमायुते ।
सहस्राब्दं विवृद्धाः स्युः स्थिरे लग्ने गृहादयः ॥"

इत्यादि ॥ ५ ॥

मार्तण्डारूढराशौ विनिहितचरणस्तत्पदे न्यस्तमूर्धा
वामे पार्श्वे शयानो भ्रमति स परितः पूरुषो वास्तुरूपः ।
पादे यद्यर्थनाशः शिरसि च मरणं तस्य पृष्ठे विपत्ति-
र्वक्षस्यूरौ च नाशः शुभफलमुदरे स्तम्भमाद्यं निदध्यात्
[॥ ६ ॥

'अथापरो ज्योतिःशास्त्रप्रसिद्धो वास्तुनरो वर्तते। तस्याप्यङ्गानि कानिचिद् गृहस्तम्भनिवेशनादौ वर्जनीयानीत्याह— **मार्ताण्डे**त्यादि। अत्र कालप्रकाशिका—

"त्रिकेषु कन्यकाद्येषु क्रमात् पूर्वादिमस्तकः।
अधरीकृतवामाङ्गः शेते वास्तुपतिः पुमान्॥
मूर्ध्नि खाते पितुर्मृत्युः पादे स्त्रीसुतयोर्मृतिः।
हस्ते पृष्ठे वारिपीडा कुक्षौ सर्वसमृद्धिकृत्॥"

इति। **मार्ताण्डारूढराशौ विनिहितचरण** इति। अयमभिप्रायः— गृहनिवेशनायोपायं वास्तुकोष्ठमेकं राशिचक्रं वितनुयात्। तच्चक्रे यत्र तात्कालिकी सूर्यस्य स्थितिः, तत्रास्य वास्तुपुरुषस्य पादः, सूर्यारूढराशेः सप्तमे मूर्धा, अन्यान्यङ्गानि तच्छयनानुरोधेन यथायथं तत्र तत्र स्थितानि। सूर्यस्य राश्यन्तरगमने पादोऽपि तत्स्थानं गच्छति, शिरश्च तत्सप्तमे भवति। एवंक्रमेण सूर्यगतिमनुसृत्य स चलतीति। चलतु कामं, किमनया चिन्तयेत्यत्राह—**पाद** इत्यादि। पादाद्यवयवेषु प्रथमस्तम्भनिवेशने तूक्तास्ते ते दोषा भवेयुः। अतस्तत्स्थितिमपि ज्ञात्वा गृहमारम्भणीयमिति भावः। 'नाश' इत्यस्य स्थाने 'नाभौ' इति क्वचित् पाठः॥ ६॥

अथ गृहाणां सन्निवेशभेदान्, तत्प्रयुक्ताः संज्ञाः, तत्फलं च वक्तुमुपक्रमते—

**उत्तरशालारहितं हिरण्यनाभं त्रिशालकं वसुदम्।**
**प्राक्छालारहितं स्यात् सुक्षेत्राख्यं समृद्धिदं वेश्म॥ ७॥**

उत्तरेत्यादि। इदमत्रावधेयं—गृहं हि सामान्यतः एकशालं द्विशालं त्रिशालं चतुश्शालमिति चतुर्विधम्। एतेषु द्वयोस्त्रयाणां चतुर्णां वा यथायथं मेलनेन दशशालान्तान्यन्यान्यपि गृहाणि सन्ति। सर्वेषामेषां भेदप्रभेदास्त्वनन्ताः। तत्र प्रकृते द्विशालत्रिशालयोः प्रधानभूतान्येव गृहाणि संगृहीतानि। तेषु हिरण्यनाभादयश्चत्वारस्त्रिशालभेदाः, गृहचुल्ल्यादयः षड् द्विशालभेदा इति। इह क्वचित् क्वचित् संज्ञाभेदा ग्रन्थान्तरेषूपलभ्यन्ते, तांस्तांस्तत्तच्छ्लोकविवरणे प्रकटीकरिष्यामः। वसुदं धनप्रदम्। शेषं स्पष्टम्॥ ७॥

याम्यविहीनं शूलं त्रिशालकं वित्तनाशनं कुरुते ।
पक्षघ्नमपरवर्जितमेतद् पुत्रघ्नवैरिदं भवति ॥ ८ ॥

याम्यविहीनं शूलमिति । चुल्लीति ग्रन्थान्तरेषु व्यपदिश्यते । तथाच तद्वचनम्—

"अथ द्वासप्ततेर्भूमस्त्रिशालानां यथाक्रमम् ।
अभिधानानि कार्त्स्न्येन लक्षणानि पृथक् पृथक् ॥
मुख्यानि तेषु चत्वारि कथ्यन्ते तानि नामतः ।
हिरण्यनाभं सुक्षेत्रं चुल्ली पक्षघ्नमेव च ॥"

इत्याद्यारभ्य,

"चुल्ली दक्षिणया हीना शालया वित्तनाशिनी "

इत्युक्तम् । पुत्रघ्नवैरिदमिति । पुत्रघ्नं वैरिदं चेत्यर्थः ॥ ८ ॥

अथ द्विशालानां लक्षणमाह—

पूर्वापरयोर्हीना शाला या तां वदन्ति गृहचुल्लीम् ।
दक्षिणसौम्यविहीनं सिद्धार्थकमाह वागधिपः ॥ ९ ॥

पश्चिमयाम्या शाला यमशूर्पं पश्चिमोत्तरा शाला ।
दण्डाख्या सा कथिता पुरातनैः शिल्पशास्त्रज्ञैः ॥ १० ॥

उत्तरपूर्वा शाला वाताख्या पूर्वदक्षिणा शाला ।
यमदैवतमिति कथितं प्राचीनैः शिल्पशास्त्रनिष्णातैः ॥ ११ ॥

पूर्वापरयोरित्यादि । पूर्वापरादिशालानां संज्ञाभेदाश्चान्यत्र दृश्यन्ते । यथा—

"हस्तिनी महिषी चेति द्वे शाले यत्र वेश्मनि ।
तत् सिद्धार्थमिति ज्ञेयं वित्तसम्पत्तिकारकम् ॥
मृत्युदं महिषीगावीभ्यां भवेद् यमसूर्यकम् ।
दण्डं स्याच्छगलीगावीगलाभ्यां दण्डमीतिदम् ॥

वातं करेणुच्छगलीयुक्तमुद्वेगकारकम् ।
माहिष्यजाम्यामुद्वेगकरी चुल्ली धनापहा ॥
काचं करेणुगार्वोभ्यां सुहृत्प्रीतिविनाशनम् ॥"

इति। वागधिपः बृहस्पतिः। यमदैवतमिति। इदं तु ग्रन्थान्तरपठितका-घस्थाने निर्दिष्टम्। शेषं सुबोधम्। इदं त्वत्र विचारणीयम्— अस्मिन्नेवा-ध्याये दिक्षु शालानिवेशनविधिप्रसङ्गे ग्रन्थकार आह— 'एका चेद् दक्षिणा शाला द्वे चेद् दक्षिणपश्चिमे' इत्यादि। एतेन दक्षिणशालया सहान्यासां शालानां प्रदक्षिणक्रमेण दिक्षु निवेशनं शुभावहमित्युक्तं भवति। तथा सति उक्तेषु षट्सु द्विशालेषु शुभावहत्वेन परिगणितस्य सिद्धार्थाभिधस्य 'दक्षिणसौम्यविहीनम्' इति अत्रोक्तं लक्षणं कथं सङ्गच्छतां, कथं वा 'पश्चिमयाम्याशाले'ति लक्षितस्य यमसूर्यस्य वर्ज्यत्वकथनमुपपन्नं स्या-दिति। इह पुनर्निर्णयाय पाठान्तरानुपलम्भाद् ग्रन्थान्तरमेव शरणीकरणी-यम्। अत्र **वराहमिहिर** आह—

"सिद्धार्थमपरयाम्ये यमसूर्यं पश्चिमोत्तरे शाले।
दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्या ॥
पूर्वापरे तु शाले गृहचुल्ली दक्षिणोत्तरे काचम्।
सिद्धार्थेऽर्थावाप्तिर्यमसूर्ये गृहपतेर्मृत्युः ॥
दण्डवधो दण्डाख्ये कलहोद्वेगः सदैव वाताख्ये।
वित्तविनाशश्चुल्ल्यां ज्ञातिविरोधः स्मृतः काचे ॥"

इति। तथा **किरणाख्ये** तन्त्रे च—

"सिद्धार्थं तु भवेच्छुभ्रं याम्यापरयुतं यदि।
पश्चिमोत्तरसंयुक्तं यमसूर्यं तु मृत्युदम् ॥
उदक्पूर्वयुतं यत् स्याद् दण्डाख्यं दण्डकारकम्।
पूर्वयाम्ययुतं ज्ञेयं वाताख्यं कलहप्रियम् ॥
पूर्वापरयुतं गेहं चुल्ली नामार्थनाशकृत्।
दक्षिणोत्तरशालाख्यं काचसंज्ञं विरोधकृत् ॥"

इति दृश्यते। एवमन्यत्रापि। सर्वेषामेषां ग्रन्थान्तराणां संवादाय, पूर्वोत्तरवाक्यसाङ्गत्याय च इह पाठव्यत्ययः कर्तव्यः। स चैवंप्रायः—

पूर्वापरयोर्हीना शाला या तां वदन्ति काचाख्याम्।
दक्षिणसौम्यविहीनां गृहचुल्लीमाह वागधिपः॥
पश्चिमयाम्या शाला सिद्धार्थं पश्चिमोत्तरा शाला।
यमशूर्पाख्या कथिता पुरातनैः शिल्पशास्त्रज्ञैः॥
उत्तरपूर्वा शाला दण्डाख्या पूर्वदक्षिणा शाला।
वाताख्या सा कथिता प्राचीनैः शिल्पशास्त्रनिष्णातैः।

इति। अंशुमद्भेदे तु एकशालादीनां नामान्येवं प्रदर्शितानि॥ यथा—

"विजयं त्वतिक्रान्तं च सुकान्तं वर्धमानकम्।
श्रीकरं चातिभद्रं च गृहभेदश्च षड्विधः॥
विजयं चैकशाला स्याद् द्विशाला त्वतिक्रान्तकम्।
त्रिशाला वै सुकान्तं स्याद् वर्धमानं चतुर्युतम्॥
श्रीकरं सप्तशाला स्याद् दशशालातिभद्रकम्।"

इत्यादि॥ ९—११॥

एषां फलमाह—

सिद्धार्थेऽर्थावाप्तिर्यमशूर्पे गृहपतेर्मृत्युः।
दण्डाख्ये दण्डवधं गृहचुल्ल्यां कलहमुद्वेगम्॥ १२॥
वाताख्ये वातभयं यमदैवतसंज्ञके भवेन्मृत्युः।
एतच्चान्यत् सकलं ज्ञात्वा स्थाप्यानि तानि सद्मानि॥१३॥

सिद्धार्थे इत्यादि। दण्डवधमिति। इह निर्दिशेदिति क्रियाध्याहार्या। एवं कलहमुद्वेगमित्यत्रापि॥ १२,१३॥

अथ दिक्षु शालाकल्पनायां नियममाह—

एका चेद् दक्षिणा शाला द्वे चेद् दक्षिणपश्चिमे।
त्रिशाला चोत्तरयुता चतुश्शाला ध्वजान्विता॥ १४॥

एका चेदित्यादि । एका चेच्छाला कर्तुमिष्टा, तदा दक्षिणशाला कर्तव्या । द्वे चेत् प्रदक्षिणक्रमेण दक्षिणपश्चिमे कर्तव्ये । तिस्रश्चेद् दक्षिण-पश्चिमाभ्यां सह उत्तरा कर्तव्या । चतस्रश्चेद् आभिः सह ध्वजयोनिका पूर्वापि शाला कर्तव्येति तदर्थः । अत्र एकशालाकरणे परं पक्षान्तरमाह चन्द्रिकायाम् । यथा—"वाञ्छन्ति केचिदेकमेव भवनं यद्यत्र पाश्चात्यकं श्रेष्ठम्" इति ॥ १४ ॥

अथैतासां शालानां यथाक्रमं पृथक् पृथक् उत्तमादिभेदेषु विहितान् मानविशेषानाह—

अष्टादशकरायामं नवाङ्गुलसमन्वितम् ।
त्र्यङ्गुलान्वितपङ्क्तिस्ततारमुत्तममन्दिरम् ॥ १५ ॥

त्रयोदशकरं दीर्घं नवाङ्गुलयुतं भवेत् ।
रुद्राङ्गुलयुतं हस्तचतुष्कं तस्य विस्तृतम् ॥ १६ ॥

मन्दिरं सिंहयोनि स्यान्मध्यमं परिकीर्तितम् ।
कनिष्ठस्यायतं कुर्यान्नवहस्तं नवाङ्गुलम् ॥ १७ ॥

त्रिहस्तत्र्यङ्गुलं तारं दक्षिणाशागतं गृहम् ।
पुष्पदन्तपदद्वारं वैश्यानामृद्धिदं तथा ॥ १८ ॥

अष्टादशेत्यादि । एभिश्चतुर्भिः श्लोकैर्दक्षिणशालाया उत्तमादि-भेदेषु मानं प्रदर्शयति । रुद्रा एकादश । सिंहयोनीति । दक्षिणशालेत्यर्थः । वैश्यानामृद्धिदामिति । पदमिदं द्वारविशेषणतया योज्यम् । गृह-विशेषणत्वे तु वैश्यानामेवैषा विहिता भवेत् । इष्टापत्तौ तु प्रकरणविरोधः प्रमाणान्तरात् समाधेयः । एवमुपर्यपि ॥ १५—१८ ॥

पश्चिमशालाया उत्तमादित्रिके मानं दर्शयति—

हस्तानां पञ्चदशकं तावदङ्गुलमायतम् ।
पञ्चाङ्गुलं पञ्चकरं पश्चिमे श्रेष्ठमालयम् ॥ १९ ॥

तिथ्यङ्गुलं दशकरमायामं मध्यमस्य तु ।
विश्वाङ्गुलं त्रिहस्तं च विस्तारं वृषयोनिकम् ॥ २० ॥
तिथ्यङ्गुलं षट्करं च कनिष्ठायाममीरितम् ।
विश्वाङ्गुलं द्विहस्तं च विस्तारं पञ्चयोनिकम् ॥ २१ ॥
भल्लाटपदगं द्वारं शूद्राणां संप्रकीर्तितम् ।

हस्तानामित्यादि । पञ्चाङ्गुलं पञ्चकरमिति । पूर्वमायामस्योक्तत्वाद् मानमिदं विस्तारस्येत्यनुक्तसिद्धम् । तिथयः पञ्चदश । विश्वे त्रयोदश । वृषयोनिकमिति । पश्चिमगृहमित्यर्थः । विश्वाङ्गुलं द्विहस्तं चेत्यस्य स्थाने 'पञ्चाङ्गुलं द्विहस्तं चे'ति 'विश्वाङ्गुलं त्रिहस्तं चे'ति च पाठान्तरम् । पञ्चयोनिकमिति । वृषयोनिकं पश्चिमगृहमित्यर्थः । शेषं सुबोधम् ॥ १९—२१½ ॥

गजयोनेरुत्तरशालाया उत्तमादित्रिके मानमाह—

समिदङ्गुलसंयुक्ततिथिहस्तायतं गृहम् ॥ २२ ॥
सप्ताङ्गुलं पञ्चकरं तारं ज्येष्ठं गजालयम् ।
समिदङ्गुलसंयुक्तं दशहस्तं तथायतम् ॥ २३ ॥
तिथ्यङ्गुलं त्रिहस्तं च तारं मध्यमुदग्गृहम् ।
समिदङ्गुलसंयुक्तं पञ्चहस्तायतं गृहम् ॥ २४ ॥
कनिष्ठमुत्तरं तारमङ्गुलोनद्विहस्तकम् ।
माहेन्द्रपदगं द्वारं ब्राह्मणानां विधीयते ॥ २५ ॥

समिदङ्गुलेत्यादि । समिधः एकविंशतिः । उत्तरमिति । उत्तरगृहमित्यर्थः ॥ २२—२५ ॥

ध्वजयोनेः पूर्वशालायास्तन्मानमाह—

त्र्यङ्गुलं तिथिहस्तं तदायामं पूर्ववेश्मनः ।
एकाङ्गुलं पञ्चकरं तारं श्रेष्ठस्य कीर्तितम् ॥ २६ ॥

त्र्यङ्गुलं नवहस्तं स्यादायामं मध्यमस्य तु ।
त्रिकरं चाङ्गुलं तारं कथितं ध्वजवेश्मनः ॥ २७ ॥

षड्हस्तं त्र्यङ्गुलायामं कनिष्ठं ध्वजमन्दिरम् ।
एकाङ्गुलं द्विहस्तं च तारं तस्य विदुर्बुधाः ॥ २८ ॥

द्वारं गृहक्षते चाथ विहितं क्षत्रियस्य तु ॥ २८½ ॥

त्र्यङ्गुलं तिथिहस्तमित्यादि । अत्र 'विदुर्बुधा' इत्यनन्तरं "प्राधान्येन कृते गेहे बलारातिदिशा भवेत्" इत्यर्धमधिकं क्वचिन्मातृकायां दृश्यते । इह सर्वत्र उत्तमादिषु विहितं मानं मायिकं, क्वचिदन्यथापि दर्शनात् । अतोऽस्य विधेरयमभिप्रायो वाच्यः—तत्तच्छालासूक्तादुत्तममानादधिकम् अधममानान्न्यूनं च मानं न कार्यमिति ।

"वास्तुनि यो विस्तारः स एव चोच्छ्रायनिश्चयः शुभदः ।
शालैकेषु गृहेष्वपि विस्ताराद् द्विगुणितं दैर्घ्यम् ॥"

इत्यन्यत्र दृष्टो विधिस्तु सर्वसाधारणः ॥ २६—२८½ ॥

एवमियता ग्रन्थेन द्विशालत्रिशालभेदस्तल्लक्षणं तत्प्रमाणादिकं च प्रदर्शितम् । तथा चतुश्शालगृहाणि च सर्वतोभद्र—नन्द्यावर्त—वर्धमान-स्वस्तिक—रुचकाख्यानि पञ्च भवन्तीति बृहत्संहितायां दृश्यते । तत्स्वरूपज्ञानाय पृथक्तया तेषां लक्षणं तद्ग्रन्थात् प्रदर्श्यते । तत्र सर्वतोभद्रलक्षणं यथा—

"अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम् ।
नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि ॥"

इति । यस्मिन् वास्तुनि सर्वासु दिक्षु अलिन्दानां गमनिकाख्यानां प्रतिषेधो विच्छित्तिर्नास्ति, तद्वास्तु सर्वतोभद्राख्यं भवति । तच्च नृपाणां देववृन्दानां च कार्यम् । चतसृष्वपि दिक्षु तत्र द्वाराणि निवेशनीयानीति तदर्थः । नन्द्यावर्तलक्षणं यथा—

"नन्द्यावर्तमलिन्दैः शालाकुड्यात् प्रदक्षिणान्तगतैः ।
द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि ॥"

इति। यस्मिन् वास्तुनि चतसृष्वपि शालासु शालाभित्तेरारभ्य प्रादक्षिण्येनान्तं गता अलिन्दा निवेश्यन्ते, पश्चिमवर्जमन्यानि च द्वाराणि दिक्षु स्थाप्यन्ते, तच्चतुश्शालं नन्द्यावर्तसंज्ञं भवतीत्यभिप्रायः। वर्धमानलक्षणं यथा—

"द्वारालिन्दोऽन्तगतः प्रदक्षिणोऽन्यः शुभस्ततश्चान्यः।
तस्मिंश्च वर्धमाने द्वारं तु न दक्षिणं कार्यम्॥"

इति। वर्धमाने त्रयोऽलिन्दाः स्युः। ते च प्रत्येकं प्रादक्षिण्येनान्तगा निवेश्येरन्। तेषु प्रधानवास्तुद्वारगतोऽलिन्दो दक्षिणोत्तरशालासंलग्नः कार्यः। द्वाराणि च दक्षिणवर्जं स्थाप्यानीत्यर्थः। स्वस्तिकलक्षणं यथा—

"अपरोऽन्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ।
तदवधि विधृतश्चान्यः प्राग्द्वारं स्वस्तिके शुभदम्॥"

इति। स्वस्तिके हि चतुश्शाले पश्चिमोऽलिन्दः दक्षिणोत्तरशालासंलग्नोऽन्तगतश्च कार्यः। दक्षिणोत्तरालिन्दौ तु पश्चिमालिन्दादारभ्य पूर्वशालासंलग्नावन्तगतौ च कार्यौ। चतुर्थः पूर्वोऽलिन्दश्च दक्षिणोत्तरालिन्दयोर्मध्ये स्थितः स्यात्। तत्र पूर्वद्वारमेकमेव निवेश्यं, नान्यदिति श्लोकार्थः। रुचकलक्षणं यथा—

"प्राक्पश्चिमावलिन्दावन्तगतौ तदवधिस्थितौ शेषौ।
रुचके द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि॥"

इति। यत्र चतुश्शाले पूर्वापरालिन्दावन्तगतौ स्यातां, दक्षिणोत्तरालिन्दौ तु तयोर्मध्ये विधृतौ भवेताम्, उत्तरवर्जमन्यानि त्रीणि द्वाराणि तत्तद्दिक्षु निवेश्येरन्, तद् रुचकाभिधमिति तदर्थः। एषां चतुश्शालभेदानां विनियोगश्च तत्रैव ग्रन्थे प्रदर्शितः। यथा —

"श्रेष्ठं नन्द्यावर्तं सर्वेषां वर्धमानसंज्ञं च।
स्वस्तिकरुचके मध्ये शेषं शुभदं नृपादीनाम्॥"

इति। सर्वेषां विप्रादीनाम्। मध्ये मध्यफले। शेषं सर्वतोभद्रम्। नृपादीनां राजतदाश्रितानां देवादीनां च। अन्यत् सुबोधम्। एवमन्यान्यपि चतुश्शालानि ग्रन्थान्तरादुन्नेयानि॥

इति वास्तुविद्यालघुविवृतौ गृहारम्भकालनियमादिकं नाम सप्तमोऽध्यायः।

---

## अथ शालाविधानं नामाष्टमोऽध्यायः ।

अथाष्टमाध्यायेन गृहविन्यासादिविधिं प्रदर्शयति । तत्र तावद् गृहं विभजते —

मानवानां गृहाः प्रोक्ता वसवस्ते ककुब्गताः ।
संस्थाभेदेन ते ज्ञेयाः पञ्चधा स्युः प्रमाणतः ॥ १ ॥

मानवानामित्यादि । वसवः अष्टौ । संस्था सन्निवेशः । पञ्चधेति । भिन्नशाला, चतुरशाला एकशाला, तुर्यश्रभिन्ना, भिन्नतुर्यश्रेति पञ्चप्रकारा इत्यर्थः ॥ १ ॥

तेषु भिन्नशालायाः स्वरूपं निर्दिशति —

स्वयोनिव्यासगतयो दिग्विदिक्षु च संस्थिताः ।
भिन्नशाला च सा प्रोक्ता मनुजानां शुभप्रदा ॥ २ ॥

स्वयोनीत्यादि । स्वस्वदिक्षु स्वस्वयोनिविस्तारगमनैः पृथक् पृथङ् निवेशिता शाला भिन्नशालेत्यर्थः । शालाशब्दो गृहपर्यायः । तथाच ग्रन्थान्तरवचनं —

"गृहमेकं तु यच्छन्नं सर्वं शालेति सा स्मृता ।"

इति । मनुजानामित्यनेनेयं सर्ववर्णसाधारणेति सूचयति । एतदेव विवृणोति चन्द्रिकायां —

"शालास्त्वन्योन्यभिन्ना निजविहितगतिव्यासयोन्यादियुक्ताः
पर्युधत्पत्रमानावधिनिहितलसत्पादुका भिन्नशालाः ।
सर्वार्हास्ता विशेषादवनिसुरहिताः कोणवेश्मप्रहीणा-
स्तत्रापि ब्राह्मणं केतुजमिति विदिता भिन्नशाला विशुद्धाः ॥"

इति ॥ २ ॥

अभिन्नशालाविशेषेषु चतुरेति संज्ञितायाः शालायाः स्वरूपमाह —

दिग्विदिक्ष्वेकयोनिस्था पर्यन्तेन तथैव च ।
ज्ञेया चतुरशालेति शिल्पशास्त्रनिदर्शिभिः ॥ ३ ॥

दिग्विदिक्ष्वित्यादि । एकस्मिन्नेव वास्तुपदे दिग्गृहैः कोणगृहै-श्चाभितः श्लिष्टम् एकावृत्येकावरणमेकयोनिकं च गृहं चतुरशालेति कथ्यत इत्यर्थः ॥ ३ ॥

दिग्गृहाश्चेत् स्वस्वयोनिकाः, विदिग्गृहमावरणादिकं चैकयोनिकं, समुदितानामेषां सन्निवेशः समचतुरश्रश्च, तदा एकशालेति संज्ञितेत्याह —

इष्टदिग्योनियुक्ता च पर्यन्तेनैकलक्षणा ।
समतुर्यश्रका ज्ञेयाप्येकशालाथवायता ॥ ४ ॥

इष्टेत्यादि । इह पर्यन्तशब्द आवरणार्थः । समतुर्यश्रकेति यदुक्तं, तत्र पक्षान्तरमाह — अथवायतेति । मुखायतेत्यर्थः । मुखायामश्च गृहस्य दक्षिणोत्तरदैर्घ्यमिति पूर्वमुक्तम् ॥ ४ ॥

उक्तलक्षणा चतुरशाला एकशाला च विप्रविषये वर्ज्येत्युपपादयति —

शूद्रादिसूतिकादीनां प्रवेशे स्पृष्टिसम्भवात् ।
एकच्छायेन ते द्वे च वर्जयेद् भूसुरालये ॥ ५ ॥

शूद्रादीत्यादि । एकच्छायेनेति । छायैक्यं नाम द्वयोरपृथग्भावेनावस्थानम् । ततश्चान्यतरस्याशुचिसम्भवे तत्संपृक्तस्य तदन्यस्याप्यशुचिसम्भवाद् द्वयोस्तादृशं विधानं विप्रविषये वर्ज्यमिति भावः ॥ ५ ॥

चतुरशालाश्लिष्टा भिन्नशालापि विप्रविषये वर्ज्येति वक्तुं तल्लक्षणमाह —

ध्वजः कोणेषु पर्यन्ते दिक्षु दिङ्मानभेदकाः ।
नाम्ना तुर्यश्रभिन्ना या नेष्टा विप्रालये च सा ॥ ६ ॥

ध्वज इत्यादि । ध्वजः ध्वजयोनिकं गृहम् । 'ध्वजः सर्वत्र सम्पन्न' इति वचनात् कोणगृहेष्वपि तत्कल्पनं नानुपपन्नमिति ज्ञेयम् । दिक्षु दिग्गृहेषु । दिङ्मानभेदकाः परस्परभेदप्रयोजकतत्तद्दिग्योनिव्यासगतयः । यदि वर्तेरन् तदेति शेषः । एकयोनिककोणगृहावरणाद्यणयुक्ता तत्तद्योनिगतिविस्तारयुक्तदिक्शालोपेता च या शाला निर्वर्त्यते, सा तुर्यश्रभिन्नेति व्यपदिश्यते । सापि विप्रविषये नेष्टेति संपिण्डितोऽर्थः ॥ ६ ॥

विवेचिताया भिन्नतुर्यश्रनाम्न्याः शालाया लक्षणमाह —

दिक्षु स्वयोनिसंयुक्ताः स्वव्यासगतयस्तथा ।
कोणेषु तद्योनियुताः पर्यन्तं ध्वजयोनिकम् ॥ ७ ॥

भिन्नतुर्यश्रका नाम्ना सा विप्रस्यापि सम्मता ।

दिक्ष्वित्यादि । अयमर्थः — दिक्शालाः स्वस्वयोन्यादिकाः स्युः । कोणशाला अपि स्वस्वयोनिकाः स्युः । पर्यन्तभ्रमणं चैकयोनिकं स्यात् । एवं निवेशिता शाला भिन्नतुर्यश्रा भवति । सा शालानां योनिभिन्नत्वात् पृथग्भावाद् विप्रयोग्येतीति । अपिशब्देनान्येषामप्येषा समुचितेति सूचयति । क्वचिन्मातृकायां 'सम्मता' इत्यनन्तरं 'क्षत्रियादित्रिवर्णानामिताः सर्वांश्च सम्मताः' इत्येकमर्धमधिकं पठ्यते ॥ ७, ७½ ॥

या पूर्वमुक्ता भिन्नशाला नाम, सा सर्ववर्णसाधारणेत्यतस्तस्या निवेशनविधिं संगृह्य प्रदर्शयाम इत्याह —

भिन्नशाला हि सर्वेषां वर्णिनां शुभदायिनी ॥ ८ ॥
ग्रन्थभारहिताच्चाल्पं वक्ष्ये तस्याश्च लक्षणम् ।

भिन्नशालेत्यादि । सर्वासामपि शालानां निर्माणप्रकाराः मनुष्यालयचन्द्रिकायां चतुर्थाध्याये निरूपिता इति ते नात्र प्रतिरूप्यन्ते ॥ ८, ८½ ॥

भिन्नशालायां निवेशितानां तत्तच्छालानां पृथग्भावप्रयोजकान् अन्तरालप्रदेशान् प्रथमं समीकुर्यादित्यभिप्रायेणाह —

अन्तरालाश्च वसवो दिग्विदिग्भेदकारकाः ॥ ९ ॥

अन्तरालाश्चेत्यादि । पृथक् पृथगवस्थितानां दिग्विदिग्गृहाणां द्वयोर्द्वयोर्मध्ये योऽवकाशः तदन्तरालम् । तानि चाष्टौ सम्भवेयुरित्यर्थः ॥ ९ ॥

तादृशानामन्तरालानामाधिक्ये न्यूनत्वे च संजाते फलमाह —

धननाशाय बाहुल्यं विदुस्तेषां च तद्विदः ।
तेषां सङ्कुचिते व्याधिस्तस्मात् ते परिवर्जयेत् ॥ १० ॥

धननाशायेत्यादि । तेषाम् अन्तरालानाम् । ते आधिक्यं न्यूनत्वं च ॥ १० ॥

कथं पुनस्तेषां न्यूनाधिकभावसम्भवः, तत्राह —

**अन्तरालस्य बाहुल्यं गृहविस्तारतो भवेत् ।**

अन्तरालस्येत्यादि । यावांस्तद्गृहस्य विस्तारस्तावानेव तेषामन्तरालानामपि विस्तारः स्यात् । तत आधिक्येऽन्तरालविस्तारस्याप्यधिकत्वं, न्यूनत्वे सङ्कोच इत्यर्थः ॥ १०½ ॥

प्रमादेन गृहविस्तारादाधिक्यं मा प्रसाङ्क्षीदिति कृत्वा अन्तरालविस्तारमानं तत्तुल्यं न कार्यं किन्तु किञ्चिदिव न्यूनमेव कर्तव्यमित्याह —

**तदाधिक्येऽन्तरालस्य तदन्तर्बहलं विदुः ॥ ११ ॥**

तदाधिक्य इत्यादि । तदाधिक्ये गृहविस्ताराधिक्ये । बहलम् विस्तारः । तदन्तः गृहविस्तारान्तः । सर्वथा गृहविस्तारादधिकमन्तरालमानं नेष्टमित्यभिप्रायः ॥ ११ ॥

सङ्कोचे पुनर्विशेषं दर्शयितुमाह —

**यत् स्वसूत्रस्य बाहुल्याद्धीनं सङ्कोच उच्यते ।**

यदित्यादि । स्वसूत्रस्य 'पदस्य गृहकृत्यंशः' इत्यादिना पञ्चाध्यायोक्तस्य गृहसूत्रस्य । हीनं गणनीयं न्यूनत्वमित्यर्थः । अनेन सङ्कोचस्य स्वरूपमुक्तम् । ततश्च क्वचिद् गृहविस्तारात् किञ्चिद् न्यूनत्वमपि न दोषायेत्युपदिष्टं भवति । 'अन्तरालाश्च'त्यादिकान् श्लोकानेवं विवृणोति चन्द्रिकाकारः —

> "दिक्कोणालयभेदकृन्ति च भवन्त्यष्टान्तरालानि तद्-
> बाहुल्यं तु धनक्षयाय हि भवत्यल्पता व्याधये ।
> मृत्युर्भित्तिविरोधनेऽन्तरविहीनत्वादतः प्रायशो
> नेष्टं गेहरसांशतोऽधिकतरं द्विन्यङ्गुलोनोनितम् ॥"

इति ॥ ११½ ॥

अथ तत्र स्तम्भविन्यासे निषिद्धं स्थानादिकमाह —

**स्वव्यासदीर्घमध्येषु न कार्याः स्तम्भसन्धयः ॥ १२ ॥**

स्वव्यासेत्यादि । व्यासो विस्तारः । स्वशब्दस्य गृहमर्थः । गृहविस्तारदैर्घ्ययोर्मध्ये स्तम्भास्तत्सन्धयश्च न कार्या इत्यर्थः । तथाच गुरुदेवः —

"वास्तुमध्ये ततो द्वारे देवांशेष्वपि कर्णयोः ।
सन्धानं स्थाननाशाय कुलक्षयकरं त्यजेत् ॥"

इति ॥ १२ ॥

वर्ज्यं सन्धिस्थानान्तरमाह —

कर्णसूत्रगतः सन्धिर्मरणायोपकल्पते ।

कर्णसूत्रेत्यादि । कर्णसूत्रं च निर्ऋतेरीशान्तं प्रसारितं सूत्रं भवति । तत्र प्रायः स्तम्भसन्धेः सम्भवात् स युक्त्या परिहरणीय इति भावः । "कर्णसूत्राद् बहिः स्तम्भान् न्यसेत् सर्वान् प्रयत्नतः" इति ग्रन्थान्तरवचनम् ॥ १२३ ॥

अथ स्तम्भानां पङ्क्तिनियमादिकान् प्रस्तौति —

अथ वक्ष्यामि सम्भेदात् स्तम्भानां पङ्क्तिनिर्णयम् ॥ १३ ॥

अथेत्यादि । क्वचिन्मातृकायां पद्यार्धमिदं न पठ्यते ॥ १३ ॥

अयुग्माः पङ्क्तयस्तत्र युग्माः स्तम्भादयः स्मृताः ।
निर्दिष्टकरतो हीनाः पङ्क्तयः परिकीर्तिताः ॥ १४ ॥
तदाधिक्यं विनाशाय पादपङ्क्तेर्नृसद्मनि ।

अयुग्मा इत्यादि । अयुग्माः विषमसङ्ख्याः एकत्र्यादयः । युग्माः समसङ्ख्याः द्विचतुरादयः । स्तम्भादय इति । आदिशब्देन तुलालुपादयो ग्राह्याः । निर्दिष्टेत्यादि । साम्प्रदायिकाः पुनराचक्षते-गृहप्रमाणं यावन्निर्दिष्टं, ततो न्यूना एव पङ्क्तयः स्युरिति । आधिक्यमपि दोषायेत्याह — तदाधिक्यमित्यादि । नृसद्मनीति । सप्तम्यन्तं निर्दिष्टेत्यनेन योजनीयम् । चन्द्रिकायां —

"युग्मास्तुलास्तम्भलुपादयः स्युः
सर्वास्त्वयुग्माः खलु पङ्क्तयस्ताः ।
नृगेहनिर्दिष्टकराधिकाश्चेद्
विनाशदास्ताः खलु पङ्क्तयः स्युः ॥"

इति । ग्रन्थान्तरे च —

"हस्तस्तम्भतुलादिकान् नरगृहे युञ्ज्यादयुग्मं यथा
युग्मायुग्मकसङ्ख्यया सुरगृहे युञ्जीत हस्तादिकान् ।"

इति ॥ १४,१४½ ॥

अथ स्तम्भविस्तारमाह —

अथ पादस्य दैर्घ्येण तद्विष्कम्भं च कारयेत् ॥ १५ ॥

अथ पादस्येत्यादि । दैर्घ्येणेति । स्तम्भदैर्घ्यं च —

यावान् गृहस्य विस्तारस्तावान् पादसमुच्छ्रयः ।
पादोनश्चार्धमेव स्यादुत्तमाधममध्यमम् ॥

इति पञ्चमाध्याये प्रकटितम् । तद्विष्कम्भमिति । स्तम्भविस्तारमित्यर्थः ॥ १५ ॥

कियद्भिर्दैर्घ्यांशैर्विस्तारः कार्य इत्यत्राह —

दर्शनाद्रिवसुद्वारपङ्क्तिरुद्रांशकैः कृतम् ।

दर्शनेत्यादि । दर्शनानि षट् । अद्रयः सप्त । वसवः अष्टौ । द्वाराणि नव । पङ्क्तयः दश । रुद्रा एकादश । इदं च स्तम्भानां मूलविस्तारमानं वेदितव्यम्, अग्रविस्तारस्योपरि 'स्तम्भाग्रस्ये'त्यादिना वक्ष्यमाणत्वात् । मयश्च —

"पादोचपङ्क्तिनन्दाष्टभागैकं वाङ्घ्रिविस्तरम् ।
दारुस्तम्भगतं ह्येतत् कुड्यपादमथोच्यते ॥
तदर्धं वा त्रिभागोनं चतुर्भागोनमेव वा ।
कुड्यस्तम्भविशालं स्यादेतत् सर्वेषु धामसु ॥
तन्मूलतारमाख्यातं तत्तारं तु तथा भजेत् ।
एकभागावहीनं तु शेषमग्रविशालकम् ॥"

इति ॥ १५½ ॥

अथ स्तम्भविस्तारप्रसङ्गात् तदनुसृतमुत्तरविस्तारमाह —

तत्समां विस्तृतिं कुर्यादुत्तराणां तथैव च ॥ १६ ॥

तदर्धं तस्य चाहल्यं नाम्ना रूपोत्तरस्य तु ।

**तत्समामित्यादि** । तत्समामिति । स्तम्भमूलविस्तारसमामित्यर्थः । घनमानमाह — **तदर्धमित्यादि** । तदर्धं स्तम्भमूलविस्ताराद-र्धम् । अन्येऽप्युत्तरघनविधयः शिल्परत्नादिषु दृश्यन्ते । विस्तरभयान्नात्र ते प्रतिरूप्यन्ते । **रूपोत्तरस्य त्विति** । इदमत्र विचारणीयम् — 'उत्तराणामि'ति बहुवचनेनैव खण्डोत्तरपत्रोत्तररूपोत्तराणां सङ्ग्रहे पुना रूपोत्तर-ग्रहणं किमर्थमिति । यदि चान्ययोः क्वचिदन्यथा कल्पनेऽपि रूपोत्तर-स्यायं बाहल्यनियम आदरणीय इति ग्रन्थकर्तुरभिप्रायः, तदा बहुवचन प्रक्रमे 'तस्ये'त्येकवचनमप्युपपन्नं भवति । एवञ्चेदन्ययोर्बाहल्यस्य विशेष विधिरन्यतोऽवगन्तव्यो भवति । अयमत्र गुरुदेवप्रदर्शितो मानविधिः—

> ''उत्तरं विन्यसेदूर्ध्वं तच्चापि त्रिविधं मतम् ।
> खण्डोत्तरं पत्रबन्धं ततो रूपोत्तरं भवेत् ॥
> स्तम्भविस्तारविस्तीर्णमुन्नतं चाङ्घ्रिजातिकम् ।
> खण्डोत्तरं स्यादेतस्मात् पादोनं पत्रबन्धकम् ॥
> स्तम्भव्याससमोत्सेधमुत्सेधार्धेन विस्तृतम् ।
> विपरीतं तु वा नीचं रूपोत्तरमिदं भवेत् ॥''

इति । अत्र 'विपरीतं तु वे'ति पक्षान्तरस्यायमर्थः — रूपोत्तरस्य घनं स्तम्भविस्तारार्धेन, विस्तारं स्तम्भव्यासेन च कुर्यादिति । अङ्घ्रिजातिक-मित्यनेन स्तम्भस्योत्तरस्य च समानद्रव्यत्वमुपदिश्यते । एवञ्च प्रकृते 'तदर्धमि'त्ययं बाहल्यविधिः रूपोत्तरस्यैवेति विज्ञायते ॥ १६,१६½ ॥

अथास्योत्तरस्योपरि अलङ्कारत्वेन संघटितस्य वाजनस्य प्रमाणमाह —

**शरांशकृतबाहल्ये तद्द्वयं तस्य वाजनम् ॥ १७ ॥**

**शरांशेत्यादि** । उत्तरस्य घने पञ्चधा विभक्ते भागद्वयेन वाजनम्, अर्थाद् वाजनस्योच्चं कुर्यादिति तदर्थः । तथाच चन्द्रिकायाम् —

> ''एकमेव यदि वाजनं भवत्युत्तरस्य शरभाजिते घने ।
> उच्चमंशयुगलेन निष्क्रमोऽप्यस्य पट्टमवशिष्टभागतः ॥''

इति । गुरुदेवस्तु —

> ''उत्तरोपरि कुर्यात् तु वाजनं तस्य कथ्यते ।
> त्रिचतुष्पञ्चदण्डानामायामस्तस्य सम्मतः ॥

स्तम्भविस्तारपादं वा त्रिपादं वोच्छ्रितं भवेत्।"

इत्यादि ॥ १७॥

अवशिष्टस्य भागत्रयस्य विनियोगमाह—

अंशैस्त्रिभिर्घनं कुर्यात् पट्टनिष्क्रममेव च।
समं वा पादहीनं वाप्यर्धं सर्वेषु वास्तुषु ॥ १८॥

अंशैरित्यादि। पट्टनिष्क्रममेव चेति। पट्टं निष्क्रमं चेत्यर्थः, नतु पट्टस्य निष्क्रममिति व्याख्येयं, 'निष्क्रमोऽप्यस्य पट्टमवशिष्टमागत' इति चन्द्रिकावचनेन विरोधात्। प्रकारान्तरमाह— समं वेत्यादि। वाजनोद्येनेति साम्प्रदायिकाः। केचित् 'पट्टनिष्क्रममेवचे'त्यंशस्य उत्तरत्रान्वयमिच्छन्ति। सर्वेष्विति। पट्टनिष्क्रमविधिरयं सर्वत्र समान इत्यर्थ इति तद्रीत्या व्याख्येयम् ॥ १८॥

अथ स्तम्भानामग्रविस्तारमाह—

स्तम्भाग्रस्य च हीनत्वमष्टमांशादिकं भवेत्।
मूलदण्डेन मूलाश्रं त्रिगुणं वाथ सार्धकम् ॥ १९॥
चतुर्गुणं च कुर्याद् वा मध्यमष्टाश्रमुच्यते।
ऊर्ध्वाश्रं मूलदण्डैकं तत्त्रिभागा शिखा स्मृता ॥ २०॥

स्तम्भाग्रस्येत्यादि। अयमर्थः— स्तम्भमूलविस्तार एव स्तम्भविस्तारो ग्राह्यः। तत्कल्पनं च 'अथ पादस्य दैर्घ्येणे'त्यादिना पूर्वं प्रदर्शितम्। तथा कल्पितस्य मूलविस्तारस्य अष्टमांशेन नवमांशेन दशमांशेन एकादशांशेन वा हीनोऽग्रविस्तारः स्यादिति। एवम् अध ओमोपरि स्थितं स्तम्भमूलपट्टं चतुरश्रं कारयेत्। तद्विस्तारस्तु स्तम्भमूलविस्तारात् त्रिगुणः सार्धत्रिगुणः चतुर्गुणो वा यथोचितं भवेत्। ऊर्ध्वं पोतिकाधोभागस्थितं स्तम्भाग्रपट्टमपि मूलविस्तारादेकांशेन चतुरश्रं कल्पयेत्। अनयोर्मूलाग्रपट्टयोर्मध्यमष्टाश्रं स्यात्। दारुस्तम्भेषु मूलाग्रभागयोः शिखा च तत्त्रिभागात् त्रिभिरंशैः कार्येत्यभिप्रायेणाह— मूलदण्डेनेत्यादिनाध्यर्धेन श्लोकेन। क्वचित् स्तम्भानामधोभागे घटादिकमपि योज्यते। तत्प्रमाणकल्पनं प्रति तु वराहमिहिर एवमाह—

"*स्तम्भं विभज्य नवधा वहनं भागो घटोऽस्य भागोऽन्यः ।*
पद्मं तयोत्तरोष्ठं कुर्याद् भागेन भागेन ॥"

इति । उह्यते धार्यते भूमौ येन स्तम्भभागेन, तद् वहनम् । तद् एकेन प्रथमेन भागेन कुर्यात् । वहनस्योपरितनं घटं द्वितीयेन भागेन कल्पयेत् । तदुपरि भागपञ्चकेन समचतुरश्रादिकं कार्यम् । स्तम्भोर्ध्वभागस्थं पद्ममुत्तरोष्ठं च यथाक्रममष्टमेन नवमेन च भागेन निवेशयेदिति तदर्थः । इदमत्रावधेयं — स्तम्भा हि आमूलाग्रं वृत्ताः चतुरश्राः षडश्राः अष्टाश्राः द्वादशाश्राः षोडशाश्राश्च भवन्ति । एकैकस्य च क्रमेण * ईशकान्तः ब्रह्मकान्तः स्कन्दकान्तः विष्णुकान्तः भानुकान्तः चन्द्रकान्त इति नाम शिल्पशास्त्रे दृश्यते । तेषु दारवाश्चेत् प्रायः चतुरश्रा वृत्ताश्च स्तम्भा मनुष्यालयेषु योज्याः स्युः । अतस्तेषामेवात्रोक्तो मानविधिर्ज्ञेयः । एवं स्तम्भानामधो वेदिकानिवेशनपक्षे ताः पुष्पखण्डा चित्रखण्डा शैवला चित्रशैवलेति चतस्रो भवन्ति । तासु आद्ये द्वे एव मनुष्यालये विहिते । तत्र पुष्पखण्डायाः लक्षणं नवमाध्याये वक्ष्यति । ओमालक्षणमप्यत्रैवाध्याये 'ओमा विष्कम्भतः कार्ये'-त्यादिना प्रकटयिष्यते । तथा स्तम्भोपर्यपि —

"पोतिका खण्डमध्यं च कुम्भं स्कन्धं च पद्मकम् ।
मालास्थानं क्रमेणैव स्तम्भाग्रात् परिकल्पयेत् ॥"

इति **मयोक्त**दिशा पोतिकादयो योज्याः । तत्र महार्णव्यादिकानां त्रिविधानां पोतिकानां लक्षणमुपरि वक्ष्यति । कुम्भाश्च सन्निवेशविशेषेण श्रीकरः चन्द्रकान्तः सौमुख्यः प्रियदर्शन इति चतुर्विधा भवन्ति । एषु वृत्तस्तम्भे श्रीकरः, चतुरश्रे सौमुख्यश्च निवेश्यते । अनयोरन्येषां च स्तम्भोपरि निवेशनीयानां पद्मकादीनां लक्षणं **मयमता**दितोऽवगत्य यथोचितं मनुष्यालयेषु स्तम्भाः परिष्कर्तव्या इति । स्तम्भवृक्षास्त्विहानुक्ता ग्रन्थान्तरात् प्रदर्श्यन्ते । अत्र मयः —

---

* मध्ये चतुरश्राद्याकाराणां तु "समचतुरश्रो रुचको वज्रोऽष्टाश्रिर्द्विवज्रको द्विगुणः । द्वात्रिंशता तु मध्ये प्रलीनको वृत्त इति वृत्तः" इति संज्ञाभेदा बृहत्संहितादिषु दृश्यन्ते । द्विगुण षोडशाश्रिः । द्वात्रिंशतेत्यस्याश्रिभिरिति विशेष्यम् । मध्य इति सर्वत्र सम्बध्यते ।

"स्निग्धसारमहासारा ह्यवृद्धास्तरुणेतराः ।
अवक्रा निर्व्रणाः सर्वे ग्रहीतव्या महीरुहाः ॥
पुण्याद्रिवनतीर्थस्था दर्शनीया मनोरमाः ।
सर्वसम्पत्समृद्ध्यर्थां भवेयुस्ते न संशयः ॥"

इत्युपादेयवृक्षसामान्यलक्षणमुक्त्वा वृक्षजातिमधिकृत्याह—

"पुरुषः खदिरः सालो मधूकः स्तम्भकस्तथा ।
शिंशपार्जुनाजकर्णौ क्षीरिणी पद्मचन्दनौ ॥
पिशितो धन्वनः पिण्डी सिंहो राजादनः शमी ।
तिलकश्च द्रुमाश्चैते स्तम्भवृक्षाः समीरिताः ॥"

इति । इह पुरुषशब्देन पुंवृक्षो ग्राह्यः । तस्य च लक्षणं तेनैवोक्तम् । यथा—

"तत्तु पुंस्त्वं भवेन्मूलात् स्थूलं स्त्रीत्वं कृशाग्रकम् ।
स्थूलाग्रं कृशमूलं तु षण्डमेतदुदाहृतम् ॥"

इति । अन्येऽपि वृक्षा ग्रन्थान्तरे प्रदर्शिताः । यथा —

"खदिरो बीजकः सालो मधूकः शाकशिंशपे ।
सर्जार्जुनाञ्जनाशोकाः कदरो रोहिणीतरुः ॥
विकङ्कतो देवदारुः श्रीपर्णीपादपस्तथा ।
कुटुम्बिनाममी प्रोक्ताः पुष्टिदा जीवदास्तथा ॥
वृक्षाणां लक्ष्यते येषां भारवारिसहिष्णुता ।
ते यथायोग्यमन्येऽपि शस्यन्ते गृहकर्मणि ॥"

इति । अन्यच्च —

"सम्यक् संलक्ष्य वृक्षाणां वर्णस्नेहत्वगादिकम् ।
विजानीयाद् वयस्तेषां बालान् वृद्धांश्च संत्यजेत् ॥
शतानि त्रीणि वर्षाणां सारद्रुमवयः स्मृतम् ।
गृह्णीयात् षोडशादूर्ध्वं सार्धवर्षशतावधेः ॥
वयसः परिमाणेन निर्वीर्यत्वं यथा नृणाम् ।
प्रोक्तं तद्वद् द्रुमाणां च स्यात् तथा छिद्रपत्रता ॥
भङ्गुराः सुषिरास्ते स्युः सकोलाक्षाः खरत्वचः ।
तस्मादिमांस्त्यजेद् वृक्षांस्तथा चैवोर्ध्वशोषिणः ॥" 90H2

इत्यादि । कर्मयोग्यतापादकं संस्करणादिकं चान्यतोऽवगन्तव्यमित्यलं पल्लवितेन ॥ १९, २० ॥

अथ वक्ष्यामि गेहादेर्नाहं तद्दीर्घविस्तरान् ।
ध्वजः सिंहो वृषो हस्ती महादिग्देवता ह्यमूः ॥ २१ ॥

अथेत्यादि । गेहादेरिति । आदिशब्देनाङ्गणादयो विवक्षिताः । तद्दीर्घविस्तरान् तेषां गृहादीनां दीर्घं विस्तारं चेत्यर्थः । बहुवचनेन तयोर्बहुप्रकारत्वं सूचयति । अथ नाहादिप्रयोजकं ध्वजादियोनिमाह — ध्वज इत्यादि । ध्वजो गरुडः । महादिग्देवता इति । प्राच्यादीनां चतसृणां प्रधानदिशां यथाक्रमं ध्वजादयश्चत्वारो देवतात्वेन व्यपदिश्यन्त इत्यर्थः । अमूः योनयः । 'योनिर्द्वयोरि'त्यमरः । अथवा अदश्शब्देन देवता गृह्यन्ते ॥ २१ ॥

विदिग्देवता आह —

विदिङ्नाथास्तु धूमः श्वा खरो ध्वाङ्क्ष इति स्मृताः ।
ध्वजादयस्तु शुभदा धूमाद्या अशुभाः स्मृताः ॥ २२ ॥

विदिङ्नाथास्त्वित्यादि । धूमादयश्च क्रमेणाग्न्यादिकोणानां देवता विज्ञेयाः । वराहमिहिरस्तु —

"रिक्तो ध्वजश्च ध्वाङ्क्षश्च सिंहः श्वा वृषभस्तथा ।
वानरो भद्र इत्यष्टौ ज्ञेया वास्तुनरा बुधैः ॥"

इत्याह । ध्वजादीनां फलमाह — ध्वजादयस्त्वित्यादि । बृहत्संहितायामेषां विनियोगे विशेषमाह —

"कल्याणं कुरुते सिंहो ब्राह्मणस्य विशेषतः ।
क्षत्रियस्य गजः शस्तो वृषभः शस्यते विशः ॥
शूद्रस्य ध्वज एवैकः शस्यतेऽर्थप्रदः सदा ।"

इति । एषां प्रतिनिधाननियमस्त्वेवं —

"वृषस्थाने गजं कुर्यात् सिंहं वृषभहस्तिनोः ।
न कुर्याद् वृषमन्यत्र शस्यते सर्वतो ध्वजः ॥"

इति । नक्षत्राण्यप्येषु तत्तद्‌गृहभर्तुरानुकूल्यज्ञानाय ग्रन्थान्तरे प्रदर्शितम् । यथा —

"रिक्ते सूर्यस्तथाश्लेषा ध्वजे सोमश्च कृत्तिका ।
ध्वाङ्क्षे राहुश्च भरणी सिंहे भौमस्तथा मघाः ॥
बुधः शुनि धनिष्ठा च वृषे जीवश्च रोहिणी ।
भद्रे तु श्रवणः सौरिः कर्णौ शुक्रश्च फाल्गुनी ॥"

इति । 'समशून्यगतो रिक्तः' इति रिक्तस्वरूपमपि तत्र प्रदर्शितम् ॥ २२ ॥

ध्वजादियोनीनां सङ्ख्यां निर्दिशति —

ध्वजः स्यादेकसङ्ख्योक्ता तथा द्वे धूम उच्यते ।
तिस्रः सिंहश्चतस्रः श्वा पञ्चानड्‌वानुदाहृतः ॥ २३ ॥
षट् खरः सप्त मातङ्गोऽप्यष्टौ ध्वाङ्क्ष इतीरिताः
ता योनयो गृहादीनां पूर्वाशादिक्रमात् स्मृताः ॥ २४ ॥

ध्वजः स्यादित्यादि । 'इष्टदीर्घं त्वि'त्यादिना लक्षयिष्यमाणे पर्यन्तमाने त्रिभिर्हत्वाष्टभिर्हृते एका चेत् सङ्ख्यावशिष्यते, तदा ध्वजाख्यो योनिः सिद्धो भवतीति तात्पर्यम् । एवं धूमादिष्वप्युन्नेयम् ॥ २३, २४ ॥

अथ गृहाणामायतिथिवारादिकान् लक्षयिष्यन् प्रथमं तदौपयिकस्य पर्यन्तमानस्यानयनप्रकारमाह —

इष्टदीर्घं तु यद् द्विघ्नं तद्रामैकांशसंयुतम् ।
इष्टयोनेर्गुणैकांशयुतं पर्यन्तमुच्यते ॥ २२ ॥

इष्टदीर्घं त्वित्यादि । अयमर्थः — भूवशात् कल्पितं स्वेष्टं गृहदैर्घ्यं द्विगुणीकृत्य लब्धया सङ्ख्यया तत्र्यंशे तद्दिग्योनित्र्यंशे च योजिते सति यल्लभ्यते, तदेव तद्‌गृहस्य पर्यन्तमानं भवतीति । दिग्योनिसङ्ख्याश्चैकादय उक्ताः । द्विघ्नं द्विगुणितम् । रामाः गुणाश्च त्रयः । अयं च विधिः चतुरश्रक्षेत्रे । अन्येषु तु 'इष्टातानवितानमानानिचये त्रिघ्नेऽष्टभिर्भाजिते शेषो योनिरि'त्यादिकाः सर्वसाधारणा विधयो ज्ञातव्याः ॥ २५ ॥

अथामुष्मात् पर्यन्तमानाद् आयादिकं साधयति —

तदष्टगुणितं कृत्वा रविभिस्तिथिभिस्तथा ।
त्रिघनैश्चाथ मुनिभिर्हृते शेषाः क्रमात् स्मृताः ॥ २६ ॥

आयस्तु तिथयस्तारा वारास्तन्नाडिका अपि ।
तत्र ताराहृतफलं देशिकैः कथितं वयः ॥ २७ ॥

बाल्यादिमरणान्तं च फलेनैव विधीयते ।

**तदष्टगुणितमित्यादि ।** अस्यायमर्थः—उक्तविधया यत् पर्यन्तमानं लब्धं, तद् अष्टसङ्ख्यया गुणयित्वा क्रमाद् द्वादशभिः पञ्चदशभिः सप्तविंशत्या सप्तभिश्च हर्तव्यम् । तत्र यान्यवशिष्टानि जायन्ते, तानि क्रमेण आयतिथितारवारा भवन्तीति । तन्नाडिका अपीत्यस्यायमभिप्रायः—तिथौ नक्षत्रे च सिद्धे अवशिष्टा अङ्गुलयश्चेत् स्युः, तदा ताभिरध्यर्धद्वयगुणिताभिस्तत्र तत्रातीता नाडिका ज्ञातुं शक्यन्त इति । वय आह—तत्रेत्यादिनार्धेन । तत्रेति । अष्टगुणिते पर्यन्तमान इत्यर्थः । **ताराहृतफलमिति ।** सप्तविंशत्या हृते सति यत् हरणफलं लभ्यते तदित्यर्थः । **फलेनैवेति ।** ताराहरणे लब्धेनैव फलेनेत्यर्थः । इदमुपरिष्टात् स्फुटीकरिष्यामः । समुच्चयकारस्तु—

> "इष्टातानवितानमाननिचये त्रिघ्नेऽष्टभिर्भाजिते
> शेषो योनिरिह व्ययो मुनियुजाथायोऽष्टनिघ्नेऽरुणैः ।
> ऋक्षैर्ऋक्षमवाप्तिरत्र तु वयो ज्ञेयं तिथिस्त्रिंशता
> वारो भूमिधरैर्निधिघ्नगुणिते धर्माहृते वा व्ययः ॥"

इति वदन् अष्टगुणिते पर्यन्ते त्रिंशता हृते शेषः शुक्लप्रतिपदादिस्तिथिरित्यभिप्रैति । तथा निधिघ्नगुणिते धर्माहृते तस्मिन् शेषो व्यय इति व्ययानयने प्रकारान्तरमप्याह । निधयो नव । धर्माः दश । अन्यत् समानम् ॥ २६—२७$\frac{1}{2}$ ॥

व्ययस्य योनेश्चानयनप्रक्रियां प्रदर्शयति —

**त्रिगुणीकृत्य पर्यन्तं शक्रैश्च वसुभिर्हृते ॥ २८ ॥**

**शेषस्तु व्ययोनी च भवतश्च यथाक्रमम् ।**

**त्रिगुणीकृत्येत्यादि** । त्रिगुणीकृत्य त्रिभिः गुणयित्वा । **शक्रैश्च वसुभिर्हृते** इति । शक्राः चतुर्दश । तैर्हृते शेषो व्ययः । वसवः अष्टौ । तैर्हृते शेषो योनिरित्यर्थः । एतदेवाह—शेषस्त्वित्यादि । जातेः राशीनां चानयनप्रकारस्त्वेवं —

"त्रिघ्नेऽङ्काभिहतेऽथवार्णवहृते नाहे द्विजाद्याः क्रमाद्
वर्णाः स्युर्निगमाहते वसुहृते वार्काहृते राशयः ।"

इति ॥ २८, २८½ ॥

अथैवं गृहाणां तिथ्यादिष्वानीयमानेषु विष्टयभिधान् तिथिविशेषांशान्, वयसु चरमं मरणयोगं च वर्जयेदित्याह —

**विष्टिर्मरणयोगो वा मा भून्मनुजधामसु ॥ २९ ॥**

**विष्टिरित्यादि** । विष्टिः बवादिषु सप्तसु करणेष्वन्तिमः । तत्स्वरूपं कालप्रकाशिकायामेवं प्रकटितं —

"सिते चतुर्थ्यामन्त्यार्धे ह्यष्टम्याद्यार्ध एव च ।
एकादश्यां परे विष्टिः पूर्वे पूर्णेन्दुपर्वणि ॥
कृष्णे तृतीये ह्यन्त्यार्धे सप्तम्याद्यार्ध एव च ।
दशम्यामपरे विष्टिश्चतुर्दश्यां तु पूर्वतः ॥"

इति । परे परार्धे । पूर्वे पूर्वार्धे । तृतीये तिथौ । अपरे उत्तरार्धे । पूर्वतः आद्यार्धे । शेषं स्पष्टम् । विष्टेर्वर्ज्यत्वस्थापनाय तदुत्पत्तिं प्रति श्रीपतिरेवमाह —

"दैत्येन्द्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवान्
स्व कायं किल निर्गता खरमुखी लाङ्गूलिनी च त्रिपात् ।
विष्टिः सप्तभुजा मृगेन्द्रगलका क्षामोदरी प्रेतगा
दैत्यघ्नी मुदितैः सुरैस्तु करणप्रान्ते नियुक्ता सदा ॥"

इति । मरणयोगो वेति । गृहपर्यन्तमाने अष्टभिर्हृत्वा सप्तविंशत्या हृते सति हरणफलं पञ्च चेत् स मरणयोगो भवति । एवं तत् चत्वारि चेत् वार्धकयोगः । त्रीणि चेद् यौवनयोगः । द्वे चेत् कौमारयोगः । एकं चेद् बाल्ययोग इति विवेकः । इदमेवाभिप्रेत्य पूर्वमुक्तं—

बाल्यादिमरणान्तं च फलेनैव विधीयते ।

इति । इह मरणवय एव मरणयोगशब्देन व्यपदिश्यते, नतु ज्योतिश्शास्त्रप्रसिद्धो नक्षत्रवारविशेषयोगः, 'मनुजधामसु' इत्यनेन मनुजधामगतस्यैवात्र स्पष्टमभिहितत्वात् ॥ २९ ॥

विष्ट्यादियुक्तेषु गृहेषु वसतां फलमाह—

मृतियोगगधामस्थो द्रुतं याति यमालयम् ।
विष्टिगः सर्वनाशाय तस्मात् तौ परिवर्जयेत् ॥ ३० ॥

बाल्यवार्धकयोगौ च रिक्ता चापि विनिन्दिताः ।
तथापि ते गृहीताः स्युर्योग्यायोग्यनिदर्शिभिः ॥ ३१ ॥

मृतीत्यादि । बाल्येत्यादि । बाल्यवार्धकयोगानयनप्रकारस्तु समनन्तरमेव विवृतोऽस्माभिः । रिक्ता चापीति । रिक्तास्वरूपं च—

"नन्दा भद्रा जया रिक्ता पूर्णा चेति सितादितः ।
पक्षच्छिद्रां च रिक्तां च शुभकर्मसु वर्जयेत् ॥"

इति कालप्रकाशिकायामुक्तम् । तथा च रिक्ता नाम चतुर्थी नवमी चतुर्दशीति त्रयस्तिथयो भवन्ति । तेऽपि यादृशगृहमानकल्पनेन समुपयन्ति तादृशं गृहमानं वर्ज्यमित्युक्तं भवति । तिथ्यानयनक्रमः पूर्वं प्रकटितः । अन्येषु गुणेषु पूर्णेषु पुनः उक्तयोर्बाल्यवार्धकयोः रिक्तायाश्चादुष्टत्वं मनसि निधायाह— तथापीत्यादि । योग्यायोग्यनिदर्शिनः हेयोपादेयवस्तुसूक्ष्मावलोकिनः । यतस्तैस्ते कचिद् गृह्यन्ते, ततस्तेषां गुणान्तरसम्पत्तौ अदुष्टत्वं निर्णीतमित्यर्थः । एवञ्च त्रिचत्वारिंशद्धस्तात्मकस्य पर्यन्तमानस्य चतुर्दशीरूपरिक्तादोषसत्त्वेऽपि गुणान्तरसम्पत्तौ न

वर्ज्यत्वमित्यभिप्रायः । एवमन्यदप्यूह्यम् । 'बाल्यवार्धकयोगौ विनिन्दिताविति' यदुक्तं, तत्र पक्षान्तरमाह **श्रीकुमारः** —

"बालत्वं कौमारं यौवनमथ वार्धकं च निधनं च ।
पञ्च वयांस्येष्वन्त्यं नेष्टं शिष्टानि वास्तुनीष्टानि ।
मध्यमे बाल्यवार्धक्ये मरणं त्वधमाधमम् ।
अनुत्तमे तु कौमारयौवने वेति केचन ॥"

इति । अनुत्तमे उत्तमोत्तमे इत्यर्थः ॥ ३०,३१ ॥

अथ गृहाणां विस्तारादिकल्पनविधिमाह—

**नाहार्धदीर्घशेषस्तु विस्तार इति कथ्यते ।**
**अथवार्धं तु परिधेस्ताभिर्हत्वा तदंशकैः ॥ ३२ ॥**
**व्यासदीर्घौ च विहितौ गुणव्यास इति स्मृतः ।**
**वस्वादिदशनान्ता याः सङ्ख्याः स्युः परिकीर्तिताः ॥ ३३ ॥**
**तत्तच्चतुष्टयं व्यासः कर्तव्यो गृहकर्मणि ।**
**वस्वादितश्चतुर्थेषु षट्सु पादोन उच्यते ॥ ३४ ॥**
**ते वर्ज्या नरशालासु ये पादोनाः प्रकीर्तिताः ।**
**पादोनं तन्तुनाशाय मृतये हीनदीर्घता ॥ ३५ ॥**

नाहार्धेत्यादि । अयमत्र निष्कर्षः — चतुरश्रक्षेत्रे विष्ट्यादिदोषरहितत्वेन कल्पितं परिधिमर्धीकृत्यैकमंशं दैर्घ्यं परिकल्प्यावशिष्टांशैर्विस्तारं कल्पयेदित्येकः प्रकारः । अपरस्तु — परिधेरेकस्मिन्नर्धे, वक्ष्यमाणासु वस्वादिदशनान्तासु पञ्चविंशतिसङ्ख्यासु एकादश; पञ्चदश; एकोनविंशतिः; त्रयोविंशतिः; सप्तविंशतिः; एकत्रिंशदित्येताः पादोनाभिधाः षट् सङ्ख्या वर्जयित्वापराभिः प्रत्येकं विभक्ते सति तत्तच्चतुरंशैर्विस्तारमवशिष्टैर्दैर्घ्यं च कल्पयेत् । यथा—परिध्यर्धे अष्टादशधा विभक्ते सति चत्वारोंऽशा विस्तारः, चतुर्दशांशाः दैर्घ्यं भवेत् । एवमपरत्रापि विभागक्रमः । तथा कल्पितस्य विस्तारस्य गुणव्यास इति संज्ञेति । ताभिः

वक्ष्यमाणाभिर्वस्वादिदशनान्ताभिः सङ्ख्याभिः। तदंशकैः 'तत्तच्चतुष्टयं व्यास' इति निर्देक्ष्यमाणैरंशैः। वसवः अष्टौ। दशनाः द्वात्रिंशत्। नाहः परिधिः। हीनदीर्घतेति। हीनविस्तारतापीत्यर्थम्। शेषं सुगमम्॥ ३२-३५॥

एवं दैर्घ्यविस्ताराधिक्यमपि न कार्यमित्याह—

दीर्घाधिक्यं विनाशाय धनानामिष्टदीर्घता।
तस्मान्निर्दिष्टहस्तेभ्यो हीनाधिक्यं न कारयेत्॥ ३६॥

दीर्घाधिक्यमित्यादि। धनानामित्यादिकं स्पष्टार्थम्॥ ३६॥

एकस्मात् करादूनानामङ्गुलीनां न्यूनत्वमाधिक्यं च न दोषप्रयोजकमित्याह—

अङ्गुलीभिर्न दोषः स्यादुभयत्र कराहते।
ताभिः कल्प्यास्तु तारादौ योनिभेदा हि पूर्ववत्॥ ३७॥

अङ्गुलीभिरित्यादि। उभयत्र न्यूनतायामाधिक्ये च। कराहते इति। एवञ्च एकादित्रयोविंशत्यन्तानामङ्गुलीनां हीनाधिकभाव इह न कार्यकारीति सिद्धम्। किमयं विधिरविशेषेण, नेत्याह — ताभिरित्यादि। तारो विस्तारः। आदिशब्देन दैर्घ्यमौन्नत्यं च ग्राह्यम्। तेषु स्तम्भादिसम्बद्धेषु अङ्गुलीनां हीनाधिकभावस्यास्त्येव कार्यकारित्वमित्यभिप्रायः। कल्प्याः, न्यूनाधिकभावनिबन्धना विशेषा इति शेषः। योनिभेदाः ध्वजादयः। पूर्ववत् समनन्तरोक्तक्रमेण। कल्प्या इति अत्रापि सम्बध्यते॥ ३७॥

अथ सन्धिकर्म प्रस्तौति—

सन्धिकर्माभिधानानि संक्षिप्य प्रवदाम्यहम्।
ह्रस्वद्रव्यं तथा वामे दीर्घद्रव्यं तु दक्षिणे॥ ३८॥

सन्धिकर्मेत्यादि। वामे, सन्धेरित्यार्थम्। शेषं स्पष्टम्॥ ३८॥

ह्रस्वदीर्घद्रव्याणां वामदक्षिणभागयोर्योजनेऽपि नियममाह—

यथाक्रमं प्रयोक्तव्यं कीलपार्श्वं तु दक्षिणे।
सन्धिखण्डस्य दैर्घ्यं तु स्वव्याससममुच्यते॥ ३९॥

अर्धं वा पादहीनं वा योग्यायोग्यं च कारयेत् ।
महीरुहाङ्घ्रिसन्धौ च खण्डं कार्यं घनांशकैः ॥ ४० ॥
एकेनापि तथा द्वाभ्यां त्रितयेनापि दृश्यते ।
स्तम्भाग्रात् तद्गतिस्तस्मादाधारेऽधःशिखान्तरी ॥ ४१ ॥

**यथाक्रमं प्रयोक्तव्यम्** इति । प्रथमं वामे ह्रस्वद्रव्यं, ततो दक्षिणे दीर्घद्रव्यं, तदनन्तरं वामे ह्रस्वद्रव्यं, दक्षिणे दीर्घद्रव्यमित्येवं क्रमेण सर्वमपि द्रव्यं सन्धौ दृढत्वाय योजनीयमित्यभिप्रायः । कीलस्थानमाह — **कीलपार्श्वमित्यादि** । सन्धिखण्डप्रमाणमाह — **सन्धिखण्डस्येत्यादि** । सन्धीयमानयोर्द्वयोर्द्रव्ययोरग्रभागे यो योंऽशः सन्धीयते स स सन्धिखण्ड इति व्यपदेश्यते । तस्य दैर्घ्यं स्वस्वद्रव्यस्य विस्तारेण तुल्यं स्यादित्यर्थः । अत्र पक्षान्तरमाह — **अर्धं वेत्यादि** । **पादहीनं** वेत्यत्र वाशब्देन स्वस्वद्रव्यव्यासात् पादम् अर्धमप्यधिकं दैर्घ्यं न दोषायेति सूचयति । इदमेवाभिप्रेत्याह —**यथायोग्यं च कारयेदिति** । दारवस्तम्भेषु उत्तरादीनां सन्धौ तत्खण्डमानमाह—**महीरुहे-त्यादि** । अङ्घ्रिः स्तम्भः । **घनांशकैरिति** । स्तम्भाग्रविस्तारांशकैरित्यर्थः । तानेवांशानाह — **एकेनापीत्यादि** । अयमभिप्रायः — स्तम्भाग्रविस्तारमध्ये सन्धेर्निषेधात् तद्विस्तारार्धे चतुरंशिते एकेन द्वाभ्यां त्रिभिश्च तदंशैर्यथाधेयसन्धिखण्डमध्यं तन्मध्याद् गमयितुं शक्यं, तथा तस्य दैर्घ्यं कल्पयेदिति । आधेयसन्धिखण्डगतेरवधिमाह — **स्तम्भाग्रादित्यादि** । स्तम्भाग्रात् स्तम्भाग्रविस्तारमध्यात् । तद्गतिः आधेयसन्धिखण्डगतिः । आधारेऽधःशिखान्तरी आधारभूतस्तम्भाग्रशिखापर्यन्ता, स्यादिति शेषः । एवञ्च सति आधेयसन्धिखण्डमध्यं स्तम्भाग्रशिखाया वामे दक्षिणे वा पार्श्वे भवतीत्यर्थतः सिध्यति । एतदनन्तरं कासुचिन्मातृकासु —

स्तम्भविष्कम्भतो मध्ये न सन्धेयं कदाचन ।
दक्षिणेऽपि च वामे वा स्तम्भचूडान्तरं तु तत् ॥
सन्धिमध्यं नियोज्यं स्यात् तदेतत् सम्पदां पदम् ॥
अथवा पादविष्कम्भदलेन चतुरंशिते ॥

एकांशमथवा द्व्यंशं त्र्यंशं वा गमयेत् तथा ।
सन्धावाधेयकस्याग्रं श्रुतिशास्त्रविदो विदुः ॥

इति त्रयः श्लोकाः पूर्वोक्तार्थविवरणपरा अधिकतया पठ्यन्ते ॥ ३९–४१ ॥

स्तम्भाग्रादिपूभयपार्श्वस्थयोः सन्ध्योस्तत्कीलयोश्च प्रत्येकाभिमुख्यं दृढत्वाय वर्ज्यमित्याह —

**अन्योन्यसन्धिवेधेऽपि कीलवेधं विशेषतः ।**
**मृत्युदं समसन्धिं च वर्जयेन्नरसद्मनि ॥ ४२ ॥**

अन्योन्येत्यादि । सन्धिवेधो नाम उभयोः सन्ध्योरेकत्राभिमुख्येनावस्थानम् । कीलवेधोऽपि तथैव । विशेषत इति । सन्ध्योराभिमुख्येऽपि तद्दृढीकरणाय योजितयोः कीलयोराभिमुख्यं सर्वथा वर्ज्यमित्यर्थः । **समसन्धिं** चेति । समसन्धिः तुल्याकारसन्धिः । एकस्मिन् स्थले द्वयोः सन्ध्योः सम्भव एवायं समसन्धिनिषेधः । एकपङ्क्तौ तु समाकार एव सन्धिर्भवेत् । तथा च गुरुदेवः —

"एकपङ्क्तिगतस्तम्भेष्वेकाकारास्तु सन्धयः ।
मिश्रसन्धिर्विनाशाय तस्मान्मिश्रं तु वर्जयेत् ॥"

इति । स्तम्भानां शयितद्रव्याणां च सन्धिभेदानधिकृत्यैवमाह मयः—

"मेषयुद्धं त्रिखण्डं च सौभद्रं चार्धपाणिकम् ।
महावृत्तं च पञ्चैते स्तम्भानां सन्धयः स्मृताः ॥
पट्टशिखा झपदन्तं च सूकरघ्राणमेव च ।
सङ्कीर्णकीलं वज्राभं पञ्चैते शयितेष्वपि ॥
स्वव्यासकर्णमध्यर्धं द्विगुणं वा तदायतम् ।
त्र्यंशैकं मध्यमशिखं मेषयुद्धं प्रकीर्तितम् ॥
स्वस्त्याकारं त्रिखण्डं स्यात् सत्रिचूलि त्रिखण्डकम् ।
पार्श्वे चतुःशिखोपेतं सौभद्रमिति संज्ञितम् ॥
अर्धं छित्वा तु मूलेऽग्रे चान्योन्याभिनिवेशनात् ।
अर्धपाणिरिति प्रोक्तो गृहीतघनमानतः ॥

अर्धवृत्तशिखं मध्ये तन्महावृत्तमुच्यते ।
वृत्ताकृतिषु पादेषु प्रयुञ्जीत विचक्षणः ॥
अर्धपाणि द्विललाटे लाङ्गलाकारपट्टशिखा ।
घनमध्यस्थकीला या सा मता पट्टशिखाह्वया ॥
स्वायामातिर्यग्बाहुस्थाशिखं तु श्वपदन्तकम् ।
ऊर्ध्वाधस्ताद् यथायोग्यं चलाचलसमान्वितम् ॥
सूकरघ्राणमित्युक्तं सूकरघ्राणसन्निभम् ।
यथाबलं यथायुक्ति नानाविधशिखान्वितम् ॥
नानाकीलैस्तु सङ्कीर्णं स्यात्तु सङ्कीर्णकीलकम् ।
वज्राकृतिशिखं नाम्ना वज्रसन्निभमेव तत् ॥
एकस्मिन् पङ्क्तिसन्धाने सन्धिरेकाकृतिर्भवेत् ।
उपर्युपरि चैवं स्याद् विपरीते विपत्करम् ॥
अन्तर्मूलं बहिश्चाग्रं पार्श्वद्रव्येषु योजयेत् ।
अन्तरग्रं बहिर्मूलं स्वामिनश्च विनाशनम् ॥"

इत्यादि ॥ ४२ ॥

अथ कीलमानमाह—

कीलं च पादविष्कम्भवस्वेकांशं च योजयेत् ।
सप्तांशमथवर्त्वंशं बहलं तु तदर्धतः ॥ ४३ ॥

कीलं चेत्यादि । कीलविस्तारः स्तम्भविस्तारस्याष्टांशेन सप्तांशेन षडंशेन वा कार्य इत्यर्थः । सप्तांशस्थाने नन्दांशपाठस्तु—

"गृहीतस्तम्भविपुले स्वष्टसप्तषडंशके ।
शिखायाः कीलकस्यापि विस्तारो भागतो भवेत् ॥"

इति गुरुदेववचनेन विरुध्यते । तस्य घनमाह— बहलं तु तदर्धत इति । तदर्धतः स्वीकृतकीलविस्तारार्धेन ॥ ४३ ॥

अथ स्तम्भोपरि निवेशनीयेष्ववयवेषु पोतिकाख्यस्य मानमाह—

पोतिका तु त्रिधा ज्ञेया नामभेदेन दैर्घ्यतः ।
त्रिदण्डा च चतुर्दण्डा पञ्चदण्डा यथाक्रमम् ॥ ४४ ॥

महार्णवी च चित्री च पत्री च प्रतिलोमतः।

**पोतिकेत्यादि** । 'पोधिके'ति क्वचित् पाठः । **नामभेदेन दैर्घ्यत** इति । दैर्घ्यस्य न्यूनत्वाधिकत्वाभ्यां कृतेन नामभेदेनेत्यर्थः। तादृशं दैर्घ्यमेवाह—**त्रिदण्डेत्यादि** । इह दण्डप्रमाणं तु 'कुड्यस्तम्भाग्रतारोऽप्यथ तदवयवाकल्पने दण्डसंज्ञः', 'स्तम्भाग्रविस्तारमुशन्ति दण्डम्', 'चरणाग्रप्रतानो दण्डः' इत्यादिग्रन्थान्तरोक्तं ग्राह्यम् । त्रिदण्डादीनां संज्ञा आह—**महार्णवीत्यादि** । **प्रतिलोमत** इति । प्रतिलोमक्रममनुसृत्येत्यर्थः । तथाच त्रिदण्डा पोतिका पत्री नामाधमा । चतुर्दण्डा पोतिका चित्री नाम मध्यमा । पञ्चदण्डा पोतिका महार्णवी नाम उत्तमेति सिद्धम् । तथाह गुरुदेवः—

''तदूर्ध्वे पोतिका स्थाप्या तस्या लक्षणमुच्यते ।
सा च स्यात् स्तम्भविस्तारात् त्रिगुणं वा चतुर्गुणम् ॥

दीर्घा पञ्चगुणं वापि नीचमध्योत्तमा स्मृता ।
नागवृत्ता पत्रचित्रा समुद्रोर्मिश्च पोतिकाः ॥

त्रिविधा नामभिर्ज्ञेयास्तासां लक्षणमुच्यते ।
स्तम्भव्याससमोत्सेधविस्तारा श्रेष्ठपोतिका ॥

षडंशोना मध्यमा स्यादूनव्यंशा कनिष्ठिका ।
भूतेभमकरव्यालरत्नवन्धविचित्रिता ॥

वल्लीचित्राग्रपट्टा च सा स्यात्तु चित्रपोतिका ।
केवलं पत्रवल्लीभिर्विचित्रा पत्रपोतिका ॥

तरङ्गमात्रचित्रा या पोतिका स्यात् तरङ्गिणी ।
तरङ्गाश्चात्र वेदर्तुव(स्वा ? स्वङ्ग)शादिसंख्यया ॥

कार्यास्तूभयतस्तुल्याः पट्टिकाछन्नमध्यगाः ।
त्रिभागे पोतिकोत्सेधे सार्धांशेनाग्रपट्टकम् ॥

तदर्धार्धेन तदधः क्षेपच्छायान्वितं भवेत् ।
तदुत्थापात् त्रिभिर्वांशैरंशाभ्यां वात्र कल्पयेत् ॥

स्वव्यासार्धात् त्रिपादाद् वा कुर्यात् ताम्रग्रमण्डनम् ।''

इति । तदूर्ध्वमित्यस्य स्तम्भोर्ध्वमित्यर्थः । शेषं सुगमम् ॥ ४४, ४४½ ॥

अथ स्तम्भपीठस्य ओमाख्यस्य प्रमाणमाह—

**ओमा विष्कम्भतः कार्या पादेनार्धेन वा युता ॥ ४५ ॥**

**ओमेत्यादि । विष्कम्भत** इति । स्तम्भस्येत्यार्थम् । विष्कम्भो विस्तारः । **पादेनार्धेन वा युतेति** । पादः चतुर्थांशः । तथाच ओमोच्छ्रयः स्तम्भविस्तारात् चतुर्थांशेन अर्धांशेन वाधिकः कार्य इति सिध्यति । **चन्द्रिकायां तु**—

''विन्यस्येत् पादपीठं सुदृढतरशिलासारदारुप्रक्लृप्तं
मासूरोपर्यथाब्ध्यश्रकवसुनृपकोणं क्वचिद् वर्तुलं वा ।
स्तम्भाधोभागकर्णोन्मितविततदर्धोच्छ्रयं वा तदङ्घ्रय-
ग्न्यर्धांशोनं च पद्मोपममपि कुहचिद् वाजनाद्यन्वितं च ॥''

इति दृश्यते । अन्यत्र च—

''स्तम्भमूलघनाः शैला ओमा द्विगुणविस्तराः ।
तुर्यश्रा मध्यतोगर्ता दण्डपादेन चोद्गताः ॥''

इति । 'पादेनार्धेन वा पुनः' इति पाठान्तरम् ॥ ४५ ॥

अथ शयितद्रव्याणां सन्धौ मूलाग्रयोराधाराधेयभावनियममाह—

**शयितानां तु सर्वेषां मूलमाधारमुच्यते ।**
**द्रव्याणामग्रमाधेयं सन्धौ च परिकल्पितम् ॥ ४६ ॥**

**शयितानामित्यादि** । शयितद्रव्याणि उत्तरादीनि । सन्धौ चेति चशब्देन स्तम्भादिनिखननेऽप्ययमेव न्याय इति सूचयति । **मयोऽपि**—

''मूलं हि शयितं चाधश्चाग्रमूर्ध्वे तु योजयेत् ।
ऊर्ध्वमूलमधश्चाग्रं सर्वसम्पाद्विनाशनम् ॥''

इति ॥ ४६ ॥

कोणेषु मूलयोरग्रयोर्वा सन्धेर्दिङ्नियममाह—

**ईशाने चाग्रमग्रेण मूलेनाग्रं तु पावके ।**
**मूलं मूलेन निर्ऋतौ मूलमग्रेण मारुते ॥ ५१ ॥**

**ईशान** इत्यादि । नायमपूर्वविधिः, यतः सन्धेयद्रव्याणामग्रं पूर्वाभिमुखमुत्तराभिमुखं च स्यादित्युक्तमवस्तात् । एवं सति दक्षिणादिशः उत्तराभिमुख्येन, पश्चिमदिशः पूर्वाभिमुख्येन च शयितयोरीशकोणे सन्धिस्तदग्रयोरेव भवेत् । तथा अग्निकोणे उत्तराभिमुखाग्रस्य मूलेन पूर्वाभिमुखाग्रस्याग्रमेव सन्दध्यात् । एवमन्ययोर्दिशोरपीति सुष्ठूक्तम् **ईशाने चाग्रमग्रेणे**त्यादि । **पराशरोऽपि**—

"मूलं मूलेन नैर्ऋत्यामग्रमग्रेण शूलिनि ।
मूलाग्रयोस्तु संयोगः शयितेऽग्नौ च मारुते ॥"

इति । तथा **मयश्च**—

"आधारं प्रथमं प्राच्यां मूलाग्रच्छेदनान्वितम् ।
दक्षिणोत्तरयोरग्रं तस्योपरि निधापयेत् ॥
दक्षिणोत्तरयोर्मूलमूर्ध्वच्छेदनसंयुतम् ।
पश्चिमस्यमधश्छेद्यं क्षेप्यमाधेययोगतः ॥
एतत्तु सर्वतोभद्रमवागादि तथा विदुः ।"

इत्यादि ॥ ५१ ॥

अथ शालाकारेणैकत्र सन्धीयमानानां पुच्छप्रमाणमाह—

**पृष्ठभागं ततः कुर्यात् तुर्यश्रं भिन्नसन्धिषु ।**
**पादोनं पादमर्धं च वदन्ति कतिचिद् बुधाः ॥ ५२ ॥**

**पृष्ठभागमि**त्यादि । पृष्ठभागः पुच्छमिति तद्विदः । **तुर्यश्रमि**ति । दैर्घ्यविस्तारयोस्तुल्यमानमित्यर्थः । तत्र पक्षान्तरं प्रदर्शयति—**पादोनमि**त्यादि । विस्तारादित्यार्थम् । क्वचिच्छ्लोकार्धमिदं न पठ्यते । एवं—

"अर्दीर्घदीर्घद्रव्याभ्यां सन्धयस्तु बहिर्बहिः ।
अन्तरन्तर्नियोज्यं स्याद् दक्षिणादक्षिणा तथा ॥

आधाराधेयभावप्रसङ्गात् सर्वेषां सामान्यतोऽङ्गाङ्गिभावादिकल्पने नियममाह —

बलाबलवशाद् भेदो दीर्घव्यासादिके भवेत् ।
यत्र यद्धस्तसंख्या स्याद् यत्र यद्योनिसम्भवः ॥ ४७ ॥

तस्याङ्गित्वं बलिष्ठत्वमाधारत्वं तथैव च ।
तदङ्गानि तदन्यान्यप्याधेयानि यथाबलम् ॥ ४८ ॥

**बलाबले**त्यादि । भेदः आधाराधेयभावादिकल्पनस्य उक्तसामान्यनियमाद् व्यत्यासः । यद्धस्तसंख्या यदनुसृता हस्तसंख्या । यद्योनिसम्भवः यन्निबन्धनं योनिकल्पनम् । अयमभिप्रायः — गृहादिषु दैर्घ्यव्यासादिकान् स्तम्भादिकांश्च प्रधानीकृत्य तदनुरोधेन हि तदन्ये व्यवस्थाप्यन्ते । ततश्च व्यवस्थापकानां बलित्वाङ्गित्वादिकं, व्यवस्थाप्यानां तदपेक्षया अबलत्वाङ्गत्वादिकं च न्यायतः सिद्धमेवानूदितमिति । तत्राप्यस्य न्यायस्य क्वचिद् युक्त्या भेदः कल्प्यः स्यादित्यभिप्रायेणाह — **यथाबलमिति** ॥ ४७, ४८ ॥

अथ सन्धेयद्रव्याणां मूलाग्रघटनानियममाह —

उत्तराग्रं च पूर्वाग्रं सर्वेषां परिकल्पितम् ।
मूलं मूलेन सन्दध्यान्नाग्रमग्रेण योजयेत् ॥ ४९ ॥

मूलयोरग्रयोः सन्धिः स्थाननाशाय कल्पते ।
व्यासदीर्घगकोणेषु नैतद् दोषकरं भवेत् ॥ ५० ॥

**उत्तराग्र**मित्यादि । उत्तराग्रम् उत्तरदिगभिमुखम् । पूर्वाग्रं प्राच्यभिमुखम् । सर्वेषां दारवाणां शैलानां वा सर्वविधानां शयितद्रव्याणाम् । **मूलं मूलेन सन्दध्या**दित्यादि । तथाच **मयः** —

"मूले मूलं न युञ्जीयादग्रे चाग्रं तथैव च ।
मूलाग्रद्रव्ययोगेन सन्धिकर्म सुखप्रदम् ॥"

इति । क्वचिदस्य विधेरपवादमाह—**व्यासदीर्घगे**त्यादि । व्यासदीर्घयोर्योगस्थाने इत्यर्थः । एतद् मूलयोरग्रयोर्वा परस्परसन्धानम् ॥ ४९, ५० ॥

कोणेषु मूलयोरग्रयोर्वा सन्धेर्दिङ्नियममाह—

**ईशाने चाग्रमग्रेण मूलेनाग्रं तु पावके ।**
**मूलं मूलेन निर्ऋतौ मूलमग्रेण मारुते ॥ ५१ ॥**

**ईशान** इत्यादि । नायमपूर्वविधिः, यतः सन्धेयद्रव्याणामग्रं पूर्वाभिमुखमुत्तराभिमुखं च स्यादित्युक्तमधस्तात् । एवं सति दक्षिणदिशः उत्तराभिमुख्येन, पश्चिमदिशः पूर्वाभिमुख्येन च शयितयोरीशकोणे सन्धिस्तदग्रयोरेव भवेत् । तथा अग्निकोणे उत्तराभिमुखाग्रस्य मूलेन पूर्वाभिमुखाग्रस्याग्रमेव सन्दध्यात् । एवमन्ययोर्दिशोरपीति सुष्ठूक्तम् **ईशाने चाग्रमग्रेणेत्यादि** । **पराशरोऽपि**—

"मूलं मूलेन नैर्ऋत्यामग्रमग्रेण शूलिनि ।
मूलाग्रयोस्तु संयोगः शयितेऽग्नौ च मारुते ॥"

इति । तथा **मयश्च** —

"आधारं प्रथमं प्राच्यां मूलाग्रच्छेदनान्वितम् ।
दक्षिणोत्तरयोरग्रं तस्योपरि निधापयेत् ॥
दक्षिणोत्तरयोर्मूलमूर्ध्वच्छेदनसंयुतम् ।
पश्चिमस्यमधश्छेदं क्षेप्यमाधेययोगतः ॥
एतत्तु सर्वतोभद्रमवागादि तथा विदुः ।"

इत्यादि ॥ ५१ ॥

अथ शालाकारेणैकत्र सन्धीयमानानां पुच्छप्रमाणमाह—

**पृष्ठभागं ततः कुर्यात् तुर्यश्रं भिन्नसन्धिषु ।**
**पादोनं पादमर्धं च वदन्ति कतिचिद् बुधाः ॥ ५२ ॥**

**पृष्ठभागमित्यादि** । पृष्ठभागः पुच्छमिति तद्विदः । तुर्यश्रमिति । दैर्घ्यविस्तारयोस्तुल्यमानमित्यर्थः । तत्र पक्षान्तरं प्रदर्शयति—**पादोनमित्यादि** । विस्तारादित्यार्थम् । क्वचिच्छ्लोकार्धमिदं न पठ्यते । एवं —

"अर्धार्घदीर्घद्रव्याभ्यां सन्धयस्तु बहिर्बहिः ।
अन्तरन्तर्नियोज्यं स्याद् दक्षिणादक्षिणा तथा ॥

मध्यद्रव्यं यथादीर्घं ह्रस्वद्रव्येषु पार्श्वयोः ।
सन्दध्याच्छयितद्रव्ये समं वापि त्रयं क्वचित् ॥
मूलाग्रयोरलङ्कारांस्त्यक्त्वा सर्वत्र सन्धयेत् ।
अन्तर्मूलं बहिश्चात्र शयितद्रव्यसन्धिषु ॥
नवद्रव्यं नवेनैव जीर्णं जीर्णेन सन्धयेत् ।
दारुणा दारु सन्दन्ध्यात् त्वक्सारं त्वचिसारकैः ॥
स्वजातिभिः स्वजातीस्तु सन्दध्यान्न विजातिभिः ।
शिलाः शिलाभिः सन्दध्यादिष्टकाभिस्तथेष्टकाः ॥
विपरीतं विनाशाय यथोद्दिष्टं सुखावहम् ।"

इत्यादिकाः सन्धिनिबन्धना विशेषाश्चान्यतोऽवगन्तव्याः ॥ ५२ ॥

अथ चूलिकामानमाह—

व्यासार्धं बहलं कुर्यान्मानोन्मानप्रमाणवित् ।
प्रायशश्चूलिकादीनां व्यासेनैव विधीयते ॥ ५३ ॥

व्यासार्धेत्यादि । चूलिका नाम उत्तरविशेषः, यः प्रान्तभागे लुपाधारत्वेन निधीयते । 'परितश्चूलिकां न्यसेदि'ति तत्प्रकरणे दर्शनात् । चूलिकाया बहलं घनं स्वव्यासस्य विस्तारस्यार्धांशेन कुर्यादिति पदार्थः । विस्तारस्तु स्वाधारभूतभित्त्याद्यनुसृत इति स इह न प्रकटितः । प्रायश इत्यनेन व्यासात् पादोनं बहलमपि न दोषायेति सूचयतीति साम्प्रदायिकाः । उन्मानम् ऊर्ध्वमानम् । प्रमाणमायामः । तथाचाभियुक्ताः —

"ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।
आयामस्तु प्रमाणं स्याद् "

इति । एतेन मानोन्मानप्रमाणविदश्चूलिकाघनं तत्र तत्रौचित्यानुरोधेन कल्पयेयुः. सामान्यतस्तु स्वस्वविस्तारार्धेन तत्कल्पनं विहितमित्यभिसन्धिराविष्कृतो भवति । विधीयत इति । बाहल्यमिति शेषः ॥ ५३ ॥

रूपोत्तरस्य तु क्वापि क्षुद्रवाजनमिष्यते ।

रूपोत्तरस्येत्यादि । रूपोत्तरविस्तारादिकमस्मिन्नेवाध्याये पूर्वं प्रकटितम् । क्षुद्रवाजनमिति । अल्पवाजनमित्यर्थः । अस्य मानं तु —

"उत्सेधे विशिखांशिते द्वितयतो रूपोत्तरे वाजनं
पद्मक्तेऽल्पमिलांशतो द्वितयतो वा स्यान्महावाजनम् ॥"

इत्यादिग्रन्थान्तरवचनाद् ज्ञातव्यम् । एवञ्च 'शरांशकृतबाहल्ये तदूर्ध्वं तस्य वाजनम्' इति पूर्वं यद् वाजनमुक्तं, तद् उक्तक्षुद्रवाजनमहावाजनाभ्यामन्यदेवेति विज्ञायते । क्वापीति । न सार्वत्रिकमिदमित्यर्थः । अत एवेदमुपरि वर्ज्यकोटौ गणयिष्यते ॥ ५३½ ॥

तान् वर्ज्यानेव परिगणयति —

अङ्घ्रेस्तथा मध्यखण्डमारूढं भूषणाय च ॥ ५४ ॥

शिलाबद्धमसूरं च सुधामिलितभित्तिकम् ।
पञ्चैतान्यपि निन्द्यानि दृश्यन्ते नरसद्मनि ॥ ५५ ॥

अङ्घ्रेरित्यादि । पञ्चैतान्यपीति । स्तम्भस्य मध्यखण्डकल्पनं, भूषणाय केवलमारूढोत्तरनिवेशः, पाषाणमयमधिष्ठानं, भित्तौ संस्कृतसुधाविशेषलेपः, रूपोत्तरे क्षुद्रवाजनकल्पनमित्येतानि पञ्चेत्यर्थः । रूपोत्तरे क्षुद्रवाजनकल्पनस्य वर्ज्यकोटौ सङ्ग्रहार्थमेव तथेत्युक्तमित्यवगन्तव्यम् । मसूरम् अधिष्ठानम् । दृश्यन्त इति । नरसद्मविषये एतानि पञ्च निषिद्धान्येव, अथापि केवलशिलामयाधिष्ठानवर्जमन्यानि चत्वार्यपि उत्तमपर्णिपूगातानि लक्ष्याम इत्याभिप्रायः । सुधायोगादिसङ्ग्रहस्तु —

"पूर्वं द्रव्यंशं कपालं मधुघृतकदलीनालिकेराम्बुमाष-
व्योषं वार्क्षः कषायः स्तनजदधिगुलैर्नफलाम्भांसि चैरम् ।
वृद्धान्यंशक्रमेण स्फुटशशिधवलं चूर्णयुक्तं शतांशं
पिष्टं सर्वं यथावद् भवति वसुधा वज्रवद्धं यथैव ॥

चतुरिद्वयमासान्तमुषिता युक्तिमर्दिता ।
श्रेष्ठमप्याषमा ज्ञेया सुधा सौधादिबन्धनी ॥

अथ कुड्यादिकं शुष्कं नीरन्ध्रं सुसमं मृदु ।
शुद्धाम्भसादौ प्रक्षाल्य दधिक्षीरगुडान्वितम् ॥
पञ्चोदकेन चालिप्य व्यपोह्यैकादिनं ततः ।
सुधां नियोजयेद् युक्त्या यथा यत्रोचितं भवेत् ॥"

इत्यादिग्रन्थान्तरप्रदर्शितविधयावगन्तव्यः । अत्र करालश्च 'अभयाक्ष-बीजमात्राः शर्कराः स्युः करालका' इत्युक्तलक्षणः । अन्यत् सुबोधम् ।
इदमत्रावधेयम् — अस्ति कश्चिद् वस्तुतत्त्ववेदिभिर्महर्षिभिः सम्प्रणीतो वज्रलेपो नाम सारतरो लेपयोगविशेषः । यः किल प्रासादकुड्यस्तम्भ-कवाटादिषु यथावत् प्रयुक्तः कृमिजलावसेकातपतापादिदोषेभ्यो जीर्ण-तापादकेभ्यस्तानि संरक्षति, सुदृढतामुत्पादयति च । अयं च प्रासादादीनां पूर्वमुक्तानां नूतनावस्थायामेव प्रदाने सुबहु गुणपौष्कल्यमादधाति । सकृद् दत्तेऽप्यस्मिन् बहुकालपर्ययाद् यदस्य सारांशो हीयेत, हानिशङ्कावोदियात्, तदा यथापेक्षं यथाबलं च पुनरपि दातव्यः । एवमसकृदनुष्ठिते एतत्प्रभा-वात् तानि सहस्रमयुतं ततोऽधिकान् वा वत्सरान् स्थातुं प्रभवन्तीति परमोपकारकोऽयं योगः प्रदर्श्यते —

(१) "आमं तिन्दुकमामं कपित्थकं पुष्पमपि च शाल्मल्याः ।
बीजानि सल्लकीनां धन्वनवल्को वचा चेति ॥
एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च ।
अवतार्योऽस्य च कल्को द्रव्यैरेतैः समनुयोज्यः ॥
श्रीवासक-रस-गुग्गुलु-भल्लातक-कुन्दुरूक-सर्जरसैः ।
अतसी-बिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः ॥"

(२) अन्यो योगः —
"लाक्षा-कुन्दुरु-गुग्गुलु-गृहधूम-कपित्थ-बिल्वमध्यानि ।
नागफल निम्ब-तिन्दुक-मदनफल-मधूक-मञ्जिष्ठाः ॥
सर्जरस-रसामलकानि चेति कल्कः कृतो द्वितीयोऽयम् ।
वज्राख्यः प्रथमगुणैरयमपि तेष्वेव कार्येषु ॥"

(३) तृतीयो योगः —
"गोमहिषाजविषाणैः खररोम्णा महिषचर्मगव्यैश्च ।
निम्ब-कपित्थ-रसैः सह वज्रतलो नाम कल्कोऽयम् ॥"

"एतैः सलिलद्रोणः क्वाथयितव्योऽष्टभागशेषश्च।"

इत्यादि पूर्ववत्।

(४) चतुर्थो योगः—

"अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिकाभागः।
मयकथितो योगोऽयं विज्ञेयो वज्रसङ्घातः॥"

मयस्तु एवमाह—

"सङ्गृह्याष्टौ सीसभागान् कांसस्य द्वौ तथांशकम्।
रीतिकायास्तु सन्तप्तो वज्राख्यः परिकीर्तितः॥"

इति। एषां विनियोगं फलं चाधिकृत्यैवमाह वराहमिहिराचार्यः—

"प्रासादहर्म्यवलभीलिङ्गप्रतिमासु कुड्यकूपेषु।
सन्तप्तो दातव्यो वर्षसहस्रायुतस्थायी॥"

इति। तिन्दुकबिल्वकपित्थकादीनामामपक्वं फलं ग्राह्यम्। द्रोणः षट्पञ्चाशदधिकं पलशतद्वयम्। अष्टभागावशेषः द्वात्रिंशत् पलानि। श्रीवासक-सर्जरस-कुन्दुरुकादीनां निर्यास उपादेयः। रसो बोलः। द्वितीययोगस्थनागफलादिस्थाने "नागबलाफल" इति पाठान्तरम्। शेषं सुगमम्॥ ५४, ५५॥

इति वास्तुविद्यालघुविवृतौ शालाविधानं नाम
अष्टमोऽध्यायः।

---

## अथ पादाधिष्ठानमानं नाम नवमोऽध्यायः।

अथ नवमाध्यायेन गृहाणामधिष्ठानभेदान् लक्षयिष्यन् प्रथमं पादमानमाह—

अथ वक्ष्यामि संक्षेपात् पादमानं यथाविधि।
उत्तरोपानयोर्मध्यगतमेतत् प्रकीर्तितम्॥ १॥

अथेत्यादि। उत्तरोपानयोरिति। 'उपानद्योरि'ति क्वचित् पाठः। उपानस्वरूपमाह मयः—

"उन्नतां प्रकृतिं भूमिं कृत्वा हस्तप्रमाणतः।
घनीकृत्य तदूर्ध्वमुपानं जन्म चोच्यते॥"

इति। एतत् पादमानम्॥ १॥

त्रिकराद्यङ्गुलीषट्कवर्धमानं ततस्ततः ।
यथाशोभं यथायोग्यं कारयेन्मर्त्यसद्मनि ॥ २ ॥

त्रिकरेत्यादि । करः चतुर्विंशत्यङ्गुलपरिमितः । तथाच संक्षिप्तं पादमानं त्रयः कराः । तत आरभ्य यावदपेक्षं षट्षडङ्गुलयो वर्धनीया इत्ययं पादमानसामान्यविधिः । विशेषस्तु --

"नृणां धामनि पादमानमुदितं स्वस्वोत्तरोपानहो-
मध्यं साङ्घ्रिकरत्रिकोन्मितमिदं स्वल्पालये दृश्यते ।
गेहन्याससमं तदर्धसहितं व्यासाङ्घ्रिपद्सप्तव-
स्वङ्काशांशयुतं च नैर्विरहितं चैवं मुनीन्द्रा जगुः ॥"

इत्यादिर्ग्रन्थान्तरोक्तो ज्ञातव्यः । अमुमेवाभिप्रायं मनसि निधायाह ग्रन्थकारः — **यथाशोभं यथायोग्यमिति । मर्त्यसद्मनीति** । देवालये त्वन्य एव पादमानविधिरित्यर्थः ॥ २ ॥

अथाधिष्ठानस्य मानमाह —

तत्त्रिभागैकमाद्यङ्गमंशाभ्यां पादमिष्यते ।
चतुर्भागैकभागं वा बाणांशैरेकभागिकम् ॥ ३ ॥
त्रयोविंशतिसप्तांशमष्टांशं वा मसूरकम् ।
चतुर्विंशतिसप्तांशमेकोनविंशदाशुगम् ॥ ४ ॥
त्रयोदशचतुर्भागमष्टादशशरांशकम् ।
समिद्रसांशमाद्यङ्गं पादं पञ्चदशांशकम् ॥ ५ ॥
त्रयस्त्रिंशति पङ्क्त्यंशं त्रिंशदष्टांशकं भवेत् ।
एवमाद्यङ्गमानानि यथायोग्यं च कारयेत् ॥ ६ ॥

तत्त्रिभागेत्यादि । अधिष्ठानाय विनियुक्तेभ्यस्तत्तदंशेभ्योऽवशिष्टैरतत्तत्पादमानं कर्तव्यमित्यर्थसिद्धमपि स्फुटप्रतीतये ग्रन्थकार एव क्वचिदाह । आद्यङ्गमिति । आद्यङ्गमित्ययं शब्दोऽधिष्ठानपर्यायः । तथाच मयः —

"मसूरकमधिष्ठानं वास्त्वाधारं धरातलम् ।
तलं कुट्टिममाद्यङ्गं पर्यायवचनानि हि ॥"

इति । अधिष्ठानं च —

"प्रासादादि निजैरङ्गैरधितिष्ठति यत् सदा ।
दृढं शिलादिघटितं तदधिष्ठानसंज्ञितम् ॥"

इत्युक्तलक्षणम् । तथाचैषां श्लोकानामयमर्थः — पादमाने त्रिधा विभक्ते एकांशेनाधिष्ठानम्, अंशाभ्यां पादं च कल्पयेदित्येकः प्रकारः । पादमाने चतुर्धा पञ्चधा वा विभक्ते एकांशेनाधिष्ठानमवशिष्टांशैः पादं कारयेदिति द्वौ प्रकारौ । त्रयोदशभागे तस्मिन् चतुर्भागमधिष्ठानं नवांशः पाद इति चतुर्थः प्रकारः । अष्टादशभागे तस्मिन् पञ्चभागमधिष्ठानं त्रयोदशभागः पाद इति पञ्चमः प्रकारः । एकोनविंशतिभागेऽमुष्मिन् पञ्चभागमधिष्ठानं चतुर्दशभागः पाद इति षष्ठः प्रकारः । एवम् एकविंशतौ, चतुर्विंशतौ, त्रिंशति, त्रयस्त्रिंशति च तत्तदंशैरधिष्ठानपादयोः कल्पना वेदितव्या । तत्र त्रयोविंशतिभागे पादमाने सति अष्टांशैरप्यधिष्ठानकल्पनमिति प्रकारान्तरम् । एवं द्वादशविधमिहाधिष्ठानमानं निर्दिष्टमिति । अधिकं तु —

"भक्तेऽस्मिन् पादमाने गुणचतुरिषुषड्सप्तनागाङ्कदिग्भि-
स्तेष्वेकांशो भवेत् कुट्टिममपि च तथेध्मांशिते वा रसांशः ।
नन्दद्वन्द्वैः शरांशो दिनकरयुगभक्तेऽद्रिभागो मुनीन्द्रै
र्ध्यंशं तिथ्यंशिते स्याज्जलधिपरिमितो विश्वभक्तेऽपि चैवम् ॥

मासूरमानानि चतुर्दशैवं भवन्ति तेभ्यः पृथगूनिताश्चेत् ।
रसाद्रिनागाङ्कदशेशभागाश्चतुर्युताशीतिमितानि सन्ति ॥"

इति चन्द्रिकाप्रदर्शिताद् विवरणाद् ज्ञातव्यम् । मयस्तु —

"तैतिलानां चतुर्हस्तं त्रिहस्तार्धं द्विजन्मनाम् ।
राज्ञां त्रिहस्तं साध्यर्धं द्विहस्तं यौवराजकम् ॥
द्विहस्तमेव वणिजां शूद्रस्यैककरं स्मृतम् ।"

इति वर्णविशेषेषु विनियोगमाह । आशुगा बाणाः । ते पञ्च । समिध एकविंशतिः । रसाः षट् । पङ्क्तिः दश । शेषं सुबोधम् ॥ ३—६ ॥

उक्तविधया नानाभेदकल्पने त्वेषां रूपाणि संज्ञाश्च भिद्यन्त इत्याह —

**एतेषां नामरूपाणि तत्तदंशवशाद् विदुः ।**
**मञ्चकस्योच्छ्रयं कुर्यान्नवभागं विचक्षणः ॥ ७ ॥**

द्व्यंशं तत्पादुकं विद्यात् सप्तांशं कुट्टिमं भवेत् ।

एतेषामित्यादि । अथवा तत्तदंशवशादित्यस्य एकद्व्याद्यवयवकल्पनावशादित्यर्थः । एतेषाम् अधिष्ठानानाम् । एषु च उत्तममध्यमाधमभेदाः सन्ति । तत्र प्रतिबन्धाख्यान्युत्तमानि, पादबन्धाख्यानि मध्यमानि, मञ्चकाख्यान्यधमानीति विवेकः । प्रकृते च ग्रन्थकारः अधममध्यमोत्तमक्रमेण तानि लक्षयिष्यन् प्रथमं मञ्चकाख्यस्य लक्षणमाह — मञ्चकस्येत्यादि । 'द्व्यंशं तु पादुकम्' इति पाठान्तरम् । कुट्टिममिति । इह कुट्टिमशब्देन जगती विवक्षिता । एवञ्च पादुकं जगती चेति द्वाववयवौ उक्तमानेन यस्य स्तः, तदेकं मञ्चकाख्यमधिष्ठानमित्युक्तं भवति । अस्य विन्यासः —

१. पादुकं — २ अंशौ ।
२. कुट्टिमं (जगती ७. अंशाः ।

इति ।

"इष्टाधिष्ठानमाने नवभिरथ विभक्ते त्रिभिः पादुकोच्चं
षड्भिः कुर्याज्जगत्युच्छ्रयमथ नयनांशकैर्वा क्रमेण ।
द्वेधैवं मञ्चकं स्यात् "

इति वदन् चन्द्रिकाकारः अस्य विभागान्तरकल्पनमपि वर्तमानमभिप्रैति ॥ ७, ७½ ॥

अथ पादुकं जगती प्रतिरिति त्रिभिरवयवैर्युक्तस्य प्रतिमञ्चकाख्यस्य मञ्चकविशेषस्य लक्षणमाह —

द्वादशांशकृतोत्सेधे द्विभागं पादुकं विदुः ॥ ८ ॥
सप्तांशं कुट्टिमोत्सेधं रामांशैः प्रतिरुच्यते ।
प्रतिमञ्चकनामैतन्नृणां साधारणं विदुः ॥ ९ ॥

द्वादशांशेत्यादि । प्रतिरिह पट्टाकारमवयवान्तरम् । कुट्टिमं जगती । रामाः त्रयः । नृणां साधारणमिति । सर्ववर्णसाधारणमित्यर्थः । शेषं स्पष्टम् । अस्य स्वरूपं यथा —

१. पादुकं — २. अंशौ ।
२. कुट्टिमं (जगती) — ७. अंशाः ।
३ प्रतिः — ३ अंशाः ।

इति । क्वचिन्मातृकायां 'प्रतिमञ्चके'ति श्लोकार्धस्य पूर्वं 'त्रिवर्गमिति संज्ञा स्यात् केचिदेवं विदुर्बुधाः' इत्येकमर्धमधिकं पठ्यते ॥ ८,९ ॥

उक्ते प्रतिमञ्चके प्रतेरधो गलयोजनेन गलमञ्चकमिति संज्ञान्तरमापन्नस्य मञ्चकभेदस्य लक्षणमाह —

पञ्चभागकृतोत्सेधेऽप्येकांशं पादुकं भवेत् ।
द्विभागा जगतिस्तस्य कण्ठमंशेन कारयेत् ॥ १० ॥
प्रतेरुच्छ्रयमेकेन नाम्ना तद् गलमञ्चकम् ।

पञ्चभागेत्यादि । सुगमोऽर्थः । अस्य विन्यासः —

१. पादुकं — १. अंश ।
२. जगती — २. अंशौ ।
३. गलः — १. अंशः ।
४. प्रतिः — १. अंशः ।

इति ॥ १०,१०½ ॥

अस्यैव प्रमाणविभागे पक्षान्तरमाह —

सूर्यांशेन कृतोत्सेधे द्व्यंशं तत्पादुकं भवेत् ॥ ११ ॥
षडंशं कुट्टिमं विद्याद् गलं द्व्यंशं तु कारयेत् ।
द्व्यंशं तत्प्रस्तरं विद्याद् गळमञ्चं तदीरितम् ॥ १२ ॥

सूर्यांशेत्यादि । कृतोत्सेध इति । अधिष्ठान इति विशेष्यम् । सूर्याः द्वादश । कुट्टिमं जगतीत्युक्तं पुरस्तात् । प्रस्तरः प्रतिः । एवमिहाधमाधिष्ठानभेदा मञ्चकाख्याश्चतुष्प्रकारा निरूपिताः ॥ ११,१२ ॥

अथ पादबन्धाख्यस्य मध्यमाधिष्ठानस्य लक्षणमाह —

सप्तिदंशकृतोत्सेधे त्रिभागं पादुकं भवेत् ।
षड्भागा जगतिस्तस्य कुमुदं दर्शनांशकम् ॥ १३ ॥
तत्पट्टिकैकभागेन भागाभ्यामन्तरी भवेत् ।
प्रतिपट्टं तदेकांशमंशाभ्यां प्रतिरुच्यते ॥ १४ ॥
पादबन्धमिति प्रोक्तं शुभदं सर्ववर्णिनाम् ।

समिदित्यादि । समिधः एकविंशतिः । कुमुदं तदाख्यमवयवान्तरम् । दर्शनानि षट् । तत्पट्टिका कुमुदपट्टिका । अन्तरीशब्दः गलपर्यायः । प्रतिपट्टं प्रतेः पट्टम । तथाच पादुकं जगती कुमुदं कण्ठः प्रतिरिति पञ्चानामवयवानां योजनात् पादबन्धमिदं पञ्चवर्गमिति व्यपदिश्यते । अस्याकृतिः—

१ पादुक — ३ अंशाः ।
२ जगती — ६ अंशाः ।
३ कुमुद — ६ अंशाः ।
४ कुमुदपट्टिका — १ अंशः ।
५ अन्तरी (गल)— २ अंशौ ।
६ प्रतिपट्ट — १ अंशः ।
७ प्रतिः — २ अंशौ ।

इति ॥ १३-१४½ ॥

अत्रोक्तस्य कुमुदस्य लक्षणमाह—

कुमुदस्याप्यलङ्कारं वक्ष्ये तद्दर्शनांशके ॥ १५ ॥
अधःपट्टं तदेकांशं मध्यं तत्त्रिभिरंशकैः ।
ऊर्ध्वपट्टं तथा द्वाभ्यामष्टाश्रकरणं तु तत् ॥ १६ ॥

कुमुदस्येत्यादि । तद्दर्शनांशक इति । तस्मिन् कुमुदे षोढा विभक्त इत्यर्थः । अधःपट्टमिति । कुमुद एवाधस्तनं पट्टमित्यर्थः । मध्यं मध्यपट्टम् । अष्टाश्रकरणं तु तदिति कुमुदस्य सन्निवेशप्रदर्शनपरं वाक्यम् । वक्ष्यमाणस्य प्रतिक्रमस्य कुमुदं तु वृत्ताकारमेव कार्यम् । तथाच श्रीकुमारः—

"पादबन्धतलानां तु षडश्रं कुमुदं भवेत् ।
सर्वेषां प्रतिबन्धानां कुमुदं वृत्तमुच्यते ॥"

इति । मञ्चकानां तु कुमुदमेव नास्तीति बोद्धव्यम् । प्रदर्शिते श्रीकुमारवचने प्रतिबन्धशब्देन प्रतिक्रम एव विवक्षितः । 'अष्टाश्रकरणं तु तदि'त्यनन्तरं क्वचिन्मातृकायां—

"वेदिकोत्सेधमेवं स्यात् षडंशीकृत्य भागशः ।
एकांशं प्रतिपट्टं स्यादंशाभ्यामन्तरी भवेत् ॥

ऊर्ध्वपट्टं तदेकांशमन्तरी कुसुमैर्युता ।
वेदिकेयं तु सामान्या कुट्टिमानां प्रकीर्तिता ॥"

इत्यधिकः पाठो दृश्यते । अयं तु उपरि वक्ष्यमाणाभ्यां 'वेदिकां प्रस्तरसमाम्' इत्यादिश्लोकाभ्यां गतार्थ इत्यस्माभिरुपेक्षितः ॥ १५,१६ ॥

अथ प्रतिबन्धापरपर्यायस्य प्रतिक्रमाख्यस्योत्तमाधिष्ठानस्य लक्षणमाह

प्रतिक्रमस्य चोत्सेधे चतुर्विंशतिभाजिते ।
त्रिभागं पादुकं विद्यादष्टांशं जगती भवेत् ॥ १७ ॥
कैरवं सप्तभागं स्यात् षडंशैः प्रतिरुच्यते ।
प्रतेरुच्छ्रयमेवं तु दशभागकृते पुनः ॥ १८ ॥
त्रिभिः कैरवपट्टं स्याद् द्वाभ्यां तत्कण्ठपट्टिका ।
अन्तरी त्रिभिरंशैः स्याद् द्वाभ्यां वाजनमिष्यते ॥ १९ ॥
सिंहव्यालगजेन्द्रादिप्रतिलक्षणभूषितम् ।

प्रतिक्रमस्येत्यादि । प्रतेरुच्छ्रयमित्यादि । प्रतेर्विनियुक्तं षडंशमेव पुनर्दशधा विभज्य तदंशान् वक्ष्यमाणक्रमेण विनियुञ्ज्यादित्यभिप्रायः । तथाच तन्त्रसमुच्चये —

"भागेरे मिहिरद्वयांशिनि ततोंऽशैः पादुकं पावकै-
रष्टाभिर्जगतीं स्वरैः कुमुदकं शेषे दशांशेऽशकैः ।
त्रिद्व्यग्न्यग्निमितैर्गलं विरचयेत् कम्पं गलं पट्टिकां
प्रत्युद्यन्मकरास्यकादिरुचिरां सिंहादिभिश्चोज्ज्वलाम् ॥"

इति । तत्कण्ठपट्टिकेति । इह तच्छब्देन प्रतिर्ग्राह्या । कण्ठपट्टिका कम्पाख्या । अन्तरी कण्ठः । वाजनं प्रतिः । वाजनालङ्कारमाह — सिंहेत्यादि । अस्मिन् प्रतिक्रमाधिष्ठाने युज्यमानं वाजनं तावत् प्रत्यलङ्कारत्वेन मयमतादिपूक्तैः सिंहादिरूपैर्यथाशोभं भूषयेदिति समुदितोऽर्थः । अस्य प्रतिक्रमस्य सन्निवेशस्त्वेवं —

१. पादुक — ३ अंशाः ।
२. जगती — ८ अंशा. ।

३. कुमुदं — ७ अंशाः ।
४. कुमुदपट्ट — $१\frac{३}{४}$ अंशाः ।
५ गलपट्टं — $१\frac{१}{४}$ अंशाः ।
६. अन्तरी — $१\frac{३}{४}$ अंशाः ।
७. वाजन (प्रति.) — $१\frac{१}{४}$ अंशाः ।

इति । एवमत्र मञ्चकं प्रतिमञ्चकं गलमञ्चकं पादबन्धं प्रतिक्रम इति पञ्चाधिष्ठानान्युक्तानि । तेषु मञ्चकादीनि त्रीणि सर्वसाधारणानि । चतुर्थं ब्राह्मणादिवर्णद्वयसाधारणमिति केचन । प्रतिक्रमस्तु देवानामेव शस्त इति बहवः, ब्राह्मणानां परं न निषिध्यत इत्यन्ये । मयस्तु—

"प्रतिक्रमं तत् सुरमन्दिरोचितं विचित्रितं पत्रलतादिरूपकैः ।
द्विजन्मभूमीश्वरयोर्मतं गृहे प्रभप्रभं पुष्टिकरं जयावहम् ॥"

इत्याह ॥ १७—$१९\frac{१}{२}$ ॥

अथैषां वेदिकामानमाह—

वेदिकां प्रस्तरसमां षडंशीकृत्य भागशः ॥ २० ॥
एकांशं प्रतिपट्टं स्यादंशाभ्यामन्तरी भवेत् ।
ऊर्ध्ववाजनमेकांशमंशं तत्पट्टिका तथा ॥ २१ ॥
ऊर्ध्वपट्टं तदेकांशमन्तरी कुसुमैर्युता ।

वेदिकामित्यादि । अस्यायमर्थः — वेदिकाया उच्छ्रयः प्रत्युच्छ्रयेण तुल्यः कार्यः । प्रत्युच्छ्रयश्च सति सम्भवे कुमुदपट्टादारभ्य प्रतिपट्टान्तोंऽशो ग्राह्यः । तस्मिन् षोढा विभक्ते वक्ष्यमाणक्रमेण तस्य तस्यांशविभागः कार्य इति । ऊर्ध्वपट्टमिति । अन्तर्या इत्यर्थम् । अन्तर्यां विशेषः — कुसुमैर्युतेति । शेषं सुबोधम् ॥ २०—$२१\frac{१}{२}$ ॥

अथ पूर्वोक्तमेव गलमञ्चकं पुनरपि परिष्कुर्वन् तस्य लक्षणमाह—

जन्म द्विभागं वसुतश्च जङ्घा
तत्पट्टिकांशेन गलं द्विभागम् ।
तदूर्ध्वपट्टं रजनीकरांशं
प्रतिर्गुणांशैर्गलमञ्चकं स्यात् ॥ २२ ॥

जन्मेत्यादि । जन्म पादुकम् । वसवः अष्टौ । जङ्घा जगती गृहशरीरस्य जङ्घास्थानत्वेन वर्तनात् तस्यास्तद्व्यपदेशः । रजनीकरः एकः । गुणाः त्रयः । एवञ्च उक्तप्रकारेण विनियुक्तानां सर्वेषामंशानां सङ्कलेन अस्य गलमञ्चकस्यामूलाग्रपरिमितिः सप्तदशांशेति लभ्यते । 'जन्म त्रिभागमि'ति शिल्परत्नपाठे तु सा अष्टादशांशेति फलति । अस्य विन्यासः—

१ जन्म (पादुकं) -- २ अंशौ ।
२. जङ्घा (जगतिः) — ८ अंशाः ।
३. जगतीपट्टं — १ अंश. ।
४. गलः — २ अंशौ ।
५. गलपट्टं — १ अंशः ।
६. प्रतिः — ३ अंशाः ।

इति ॥ २२६ ॥

इति वास्तुविद्यालघुविवृतौ पादाधिष्ठानमान नाम नवमोऽध्यायः ।

---

## अथ लुपाप्रमाणकथनं नाम दशमोऽध्यायः ।

अथोपरितनेषु वस्तुषु मुख्यानां लुपानां प्रमाणं वास्तुमुपक्रमते—

**अथ संक्षिप्य वक्ष्यामो लुपानां लक्षणं वयम् ।**
**उत्तरस्यानुरूपेण तासां तारमुदीरितम् ॥ १ ॥**

अथेत्यादि । लुपा नाम उत्तरपट्टिकायां सन्धीयमानाः फलकविशेषाः, यासु तिर्यक् पट्टिकाः कीलैः सङ्घट्य गृहोपर्याच्छादनं लोष्टादि प्रस्तारयन्ति शिल्पिवराः । ताश्च प्रकृतिलुपा विकृतिलुपा इति द्विधा विभक्ताः । वंशाग्रीवान्तम् ऋजवो या दृश्यन्ते, ताः प्रकृतिलुपा ऋजुमध्याख्याः । गृहकोणेषु तदुपान्ते च या दीर्घतरा दृश्यन्ते, ता विकृतिलुपाः कोटगुपकोटयाख्याः । अन्यास्तु द्वितीयादिलुपा यथायथं तत्र तत्रान्तर्भवन्ति । वृत्ते समचतुरश्राकारे च गृहे सर्वाः कूटप्रविष्टाग्रकाः स्युः । आयतचतुरश्रे विकृतिलुपाः वंशबद्धकूटावस्थापिताग्राः, प्रकृतिलुपाः वंश-

पार्श्वकीलिताग्राश्च भवन्ति । कूटः गृहशिखरम् । वंशः वंशास्थिस्थानीयं महादारु, यः कूटपार्श्वे सन्धीयते । वृत्ते समचतुरश्रे च नास्त्यस्यावश्यकतेति स्थितिः । तत्र प्रकृतिलुपानां विस्तारं तावदाह — उत्तरस्येत्यादि । उत्तरं चेह प्रायशश्चूलिकाभिधं पर्यन्तोत्तरं ग्राह्यम् । तारः विस्तारः ॥ १ ॥

तत्समं पादहीनं वा वस्वंशोनाधिकेन वा ।

पादाधिकं वा वस्वंशत्रितयाधिकमेव वा ॥ २ ॥

विस्तारार्धाधिकं वा स्याद् व्यासमेवं प्रकीर्तितम् ।

तत्सममित्यादिकं तद्विस्तारकल्पनपरं वाक्यम् । तत्समम् उत्तरविस्तारसमं, पादहीनम् उत्तरविस्तारात् चतुर्थांशहीनं, वस्वंशोनाधिकेन वा तस्माद् अष्टांशोनम् अष्टांशाधिकं च पादाधिकं वा चतुर्थांशाधिकं च, वस्वंशत्रितयाधिकमेव वा अर्धाधिकपादांशाधिकं च, विस्तारार्धाधिकं वा उत्तरविस्ताराद् अर्धांशाधिकं चेति सप्तप्रकारं प्रकृतिलुपानां विस्तारकल्पनमित्यर्थः । 'व्यासमेवं प्रकीर्तितम्' इत्यस्य स्थाने 'विस्तारं प्रकृतेरिदम्' इति शिल्परत्नपाठः ॥ २,२½ ॥

तासां बाहल्यविधिमाह—

सार्धाङ्गुलं समारभ्य यावद्दत्वङ्गुलान्तकम् ॥ ३ ॥

लुपानामंशवृद्ध्या तु बाहल्यं यववृद्धितः ।

सार्धाङ्गुलमित्यादि । अर्धाधिकादङ्गुलादारभ्य एकैकयववृद्ध्या यथोचितं षडङ्गुलपर्यन्तं घनं कल्प्यमित्यर्थः । तथाच शिल्परत्ने —

"सार्धाङ्गुलात् तु बाहल्यं लुपानां यववृद्धितः ।
यावद्दत्वङ्गुलं तावत् कुर्यादौचित्यभेदतः ॥"

इति । केचिदत्र साम्प्रदायिकाः 'लुपानामंशवृद्ध्या तु' इत्येतद् वाक्यान्तरं परिकल्प्य एकैकांशवृद्ध्यापि बाहल्यं कल्प्यमिति प्रकारान्तरमप्युपदिष्टं मन्यन्ते । अंशस्वरूपं चाङ्गुलादिकमौचित्यतो ज्ञातव्यमिति च वदन्ति । अन्ये पुनः 'शिष्टानामंशवृद्ध्ये'ति क्वचिद् दृष्टं पाठमादृत्य प्रकृतिभिन्नानां लुपानां तु घनम् अध्यर्धाङ्गुलादारभ्य यववृद्ध्यैव कार्यं, न तु प्रकृतिलुपावद् अङ्गुलवृद्ध्या कार्यम् इति वदन्ति ॥ ३,३½ ॥

अथ विकृतिलुपानां कोट्युपकोट्यादीनां विस्तारकल्पनमाह —

प्रकृतिन्याससदृशं तुर्यश्रं कल्पयेद् बुधः ॥ ४ ॥

ताराधगतसूत्राणि लुपानामपि कल्पयेत्।

तस्य कर्णादिना तारं कोट्यादीनां प्रकीर्तितम् ॥ ५ ॥

प्रकृतिन्याससदृशमित्यादि। अयमभिप्रायः — उक्तप्रकारेण प्रकृतिलुपानां विस्तारे निर्णीते सति तन्मानेनैकं चतुरश्रक्षेत्रं भूमौ फलके वालिखेत्। ततस्तस्य वामोर्ध्वकोणादारभ्याभिमुखकोणान्तमेकां कर्णरेखां लिखेत्। अस्या दैर्घ्यमानमेव कोटिलुपानां विस्तारमानं भवति। अथ उपकोट्यादीनां तदुच्यते — पूर्वोक्ता कर्णरेखा कोटिलुपेति परिकल्प्य तत्र यावत्य उपकोटिलुपा इष्टाः, तावतीनामेकैकस्या इदमिदं स्थानमिति सङ्कल्प्यैकैकं बिन्दुं तद्गृहविस्तारार्धमानत्वेन सङ्कल्पितस्य तच्चतुरश्रक्षेत्रस्याधोरेखायां भुजात्वेन गणनीयायां यथाक्रमं निवेशयेत्। ततस्तत्तद्बिन्दोरारभ्यैकैकां रेखां तच्चतुरश्रवामोर्ध्वकोणान्तं नयेत्। आसां रेखाणां यद्यद् दैर्घ्यमानं भवति, तत्तदेव तत्तदुपकोट्यादिलुपानां विस्तारमानं स्यादिति। एतदेव सङ्गृह्याह चन्द्रिकायाम्

"अभ्यश्रं मध्यकस्य प्रततिमितमथाकल्प्य तत्कर्णमानं
कोट्यां तारं लुपायामथ विकृतिलुपाषट्स्वितमत्रैव कुर्यात्।
तत्तत्कर्णप्रमाणं खलु विकृतिलुपानां पृथग् विस्तृतिः स्यात्"

इति। कर्णादिनेति। कर्णोपकर्णादिरेखाणां दैर्घ्येणेत्यर्थः॥ ४, ५॥

अथ लुपानां दैर्घ्यकल्पनमाह —

वंशोच्चमुत्तराद् यत् तत् स्वेनैव गुणयेद् बुधः।

यदायतानि स्थानानि लुपानां वंशलम्बतः ॥ ६ ॥

प्रत्येकं स्वगुणीकृत्य पृथग्वंशकृतौ युतम्।

तन्मूलं तु लुपामानमेवं सर्वत्र कल्पयेत् ॥ ७ ॥

वंशोच्चमित्यादि। वंशस्वरूपं तु पूर्वं प्रकटितम्। इदं चायताश्रे। यत्र वृत्तादौ वंशस्यासम्भवः, तत्र कूटो ग्राह्यः। एवं सर्वत्र। स्वेनैव

गुणयेत् वर्गीकुर्यात् । यदायतानि यावत्या आयत्या युक्तानि, तावतीमायतिमपीत्यर्थम् । वंशलम्बतः वंशाद् अधः ऋजु लम्बितात् सूत्रात् । वंशकृतौ वर्गीकृतायां वंशाद्युत्तरान्तमानसंख्यायाम् । 'वंशोच्चस्य कृतौ' इति शिल्परत्नपाठः । तन्मूलं तस्याः मिथःसङ्कलितवर्गद्वयसंख्यायाः मूलम् । लुपामानं लुपादैर्घ्यम् । इति पदार्थः । अयमत्र श्लोकद्वयस्य संपिण्डितोऽर्थः — वंशादिपर्यन्तोत्तरान्तं यन्मानं, यच्च वंशलम्बाद् उत्तरे लुपासङ्घटनस्थानावधिकं मानं, तदुभयं पृथक् पृथग् वर्गीकृत्य मिथः सङ्कलने यल्लभ्यते, तस्य यद् वर्गमूलं, तद् वंशोच्चाद्युत्तरान्तावधिकलुपादैर्घ्यं भवतीति । उदाहरणं— वंशोच्चमानं त्रयो हस्ताः, वंशलम्बादुत्तरे लुपास्थानावधिकं मानं चत्वारो हस्ता इत्यास्ताम् । तत्र चतुर्णां त्रयाणां च वर्गौ यथाक्रमं षोडश नव च भवतः । तयोर्मिथः सङ्कलने पञ्चविंशतिर्भवति । तस्या वर्गमूलं पञ्च । एतदेव सुसूक्ष्मं वंशाद्युत्तरान्तलुपादैर्घ्यं भवतीति । यत्र वर्गमूलं न भवति, यथा चतुर्विंशत्यादेः, तत्र विधिर्गणितशास्त्रादवगन्तव्यः ॥ ६,७ ॥

उत्तराद् नीव्रान्तं लुपादैर्घ्यं साधयति —

उत्तरान्नीव्रलम्बं यत् तेन तत्रापि कल्पयेत् ।
प्रमाणमेवं सर्वत्र लुपानां कीर्तितं बुधैः ॥ ८ ॥

उत्तरादित्यादि । अत्रापि प्रक्रिया पूर्ववदेव । यथा — उत्तरान्नीव्रान्तमानं यत्, यच्च तत्र लुपानिवेशनस्थानस्थोत्तरकोणलम्बसूत्रान्नीव्रान्तं मानं, तदुभयं पृथक् पृथग् वर्गीकृत्य मिथः सङ्कलनेन यज्जातं, तस्य वर्गमूलं पर्यन्तोत्तरकोणान्नीव्रान्तलुपादैर्घ्यं भवतीति । एवमेव सर्वासां प्रकृतिविकृतिलुपानां दैर्घ्यं साधनीयमित्याह—प्रमाणमेवमित्यादि ॥८॥

अथ प्रकारान्तरेण लुपानां दैर्घ्यं साधयति —

तारार्धं स्वगुणीकृत्य वंशोच्चकृतिसंयुतम् ।
चूलिकामध्यमात् कीलाद् यथादिष्टलुपान्तरम् ॥ ९ ॥
तदपि स्वगुणीकृत्य तारार्धोच्चकृतौ युतम् ।
तत्तदिष्टलुपायाममिष्टयोगात् प्रकल्पयेत् ॥ १० ॥

**तारार्धमित्यादि** । इयमत्र प्रक्रिया — गृहविस्तारे निर्णीते तदर्धमानम्, उत्तराद् वंशोद्यान्तं दैर्घ्यं च पृथक् पृथग् वर्गीकृत्य मिथः सङ्कलयेत्। ततः चूलिकाख्यपर्यन्तोत्तरे तत्तल्लुपासङ्घटनस्थानमङ्कयेत्। एवं गृहविस्तारस्य सुसूक्ष्मं मध्यस्थानमप्याकलय्य तत्राङ्कयेत्। अथ तन्मध्याङ्कादेकं सूत्रमुत्तरे कोटिलुपाङ्कस्थानपर्यन्तं प्रसार्य तन्मानमपि वर्गीकृत्य पूर्वोक्तेन तारार्धवंशोच्चकृतियोगेन योजयेत्। तस्य यद् वर्गमूलमुपलभ्यते, तत् कोटिलुपाया दैर्घ्यं भवति। तथा गृहविस्तारमध्याङ्कादेव उपकोटिलुपाङ्कस्थानपर्यन्तं प्रसारितस्य सूत्रस्य मानं वर्गीकृत्य तारार्धवंशोच्चवर्गयोगेन, योजने तस्य वर्गमूलमुपकोटिलुपादैर्घ्यमानं स्यात्। एवं रीत्या तत्तल्लुपानिवेशनस्थानेषु गृहविस्तारमध्यस्थानादेवास्फालितानां सूत्राणां मानं पृथक् पृथग् वर्गीकृत्य तारार्धवंशोच्चकृतियोगेनैकस्य योजने तत्तद्वर्गमूलं तत्तल्लुपादैर्घ्यमानं भवतीति। अथ पदार्थः प्रदर्श्यते — स्वगुणीकृत्य स्वेनैव गुणयित्वा, वर्गीकृत्येति यावत्। वंशोच्चकृतिसंयुतम् उत्तराद् वंशान्तस्य मानस्य कृतौ वर्गे संयुतं योजितम्, अर्थाद् वर्गीकृतगृहविस्तारार्धमानमेव। स्यादिति शेषः। चूलिकामध्यमात् कीलात् चूलिकाख्यस्य पर्यन्तोत्तरस्य मध्यस्थात् कीलात्, अर्थाद् गृहविस्तारमध्यस्थानात्। यद्यद् इष्टलुपान्तरम् इष्टानां कोट्युपकोट्यादीनां तत्तल्लुपानां लुपास्थानानां यद्यद् अन्तरालमानम्। तत्तदपीत्यर्थे तदपीत्युक्तम्। स्वगुणीकृत्य वर्गीकृत्य । तारार्धोच्चकृतौ गृहविस्तारार्धस्य वंशोच्चस्य च कृतौ, अर्थात् पृथक् पृथग् वर्गीकृत्य मिथः संयोजिते पिण्डे। युतं योजितं सत्, तस्य वर्गमूलमिति शेषः। **तत्तदिष्टलुपायाममित्यादि** स्पष्टार्थम्। एतावता प्रकरणेन सर्वासां लुपानां क्रमेण विस्तारघनदैर्घ्यमानानि साधितानि ॥ ९,१० ॥

अथ लुपावयवानां वलयानां स्थाननिर्णयाय ध्वजसूत्रास्फालनमाह —

> ध्वजसूत्रं तु कर्तव्यमामूलाग्रं तु पार्श्वयोः ।
> सूत्रादभ्यन्तरं कार्यं चूलिकाव्यासमानतः ॥ ११ ॥

**ध्वजसूत्रमित्यादि** । पार्श्वयोरिति । लुपानामिति शेषः । **सूत्रादभ्यन्तरमिति** । ध्वजसूत्राद् अधोभागावधिकम् अन्तरालमान-

मित्यर्थः । चूलिका लुपाधारभूतं पर्यन्तोत्तरमिति पूर्वमुक्तम् । व्यासो विस्तारः । ध्वजसूत्रास्फालनक्रमं प्रत्यपर एवमाह —

"व्यासेऽङ्कांशिन्यधोऽब्धिप्रमितमुपरि बाणोन्मितं कल्पयित्वा
मध्ये सूत्रं ध्वजाख्यं विरचयतु लुपापार्श्वयुग्मे समन्तात् ।
अर्धांशिन्यप्यधस्तादनलमितमुदध्युन्मितं चोर्ध्वभागं
यद्वा बाणांशितेऽग्निप्रमितमुपरि दस्रोन्मितं चाप्यधस्तात् ॥"

इति ॥ ११ ॥

तत्र वलयस्थानमाह —

उत्तरान्नीव्रपर्यन्तलुपायामं विचक्षणः ।
कुर्यान्नेत्रांशतो नीव्राद् वलयं बाणभागतः ॥ १२ ॥

**उत्तरादित्यादि** । उत्तराद् नीव्रान्तं लुपादैर्घ्यं पञ्चधा विभज्य नीव्रादारभ्य गणनायां द्वितीयेंऽशे वलयस्थानं कुर्यात् । वलयोत्तरयोरन्तरमंशत्रयं स्यादित्यर्थः । 'वलयं बाणभागत' इत्यस्य स्थाने 'वलयं शेपमूर्ध्वतः' इति शिल्परत्नपाठः ॥ १२ ॥

उक्तश्चायं नियमः एकवलयकरणे । वलयद्वये कर्तव्ये कथं नियम इत्यत्राह —

त्रिधा विभक्ते कर्तव्ये विताने पर्वणोर्द्वयोः ।

**त्रिधा विभक्त इत्यादि** । पर्यन्तोत्तराद् नीव्रान्तमाने त्रिधा विभक्ते सति एकैकांशान्तरेण वलयद्वयं कर्तव्यम् । तथाच नीव्राद् प्रथमवलयस्य, ततो द्वितीयवलयस्य, ततश्चोत्तरस्य चान्तरम् एकैकेनांशेन भवेदित्यर्थः पर्यवसन्नः । 'त्रिधा विभक्ते कर्तव्यं वलयद्वितयं समम्' इति शिल्परत्नम् । द्वयोः पर्वणोः वलयोपान्त्यखण्ड्योः । विताने तत्राम्नि सूत्रे । कर्तव्ये, द्वे वलये इति शेषः । वितानसूत्रलक्षणादिकमुपरिष्टात् स्फुटीकरिष्यति । वलययोर्मध्यप्रदेशे हि निम्नतायामापादितायां द्वे खण्ड्यौ भवत इति तत्प्रकरणे व्यक्तं भविष्यति ॥ १२½ ॥

अथ पर्यन्तोत्तरादुपरितनलुपावलयप्रकल्पनमाह —

उत्तराद् वंशमानं यत् पञ्चधा विभजेद् बुधः ॥ १३ ॥
वलयोत्तरयोर्मध्यं कर्तव्यं नेत्रभागतः ।

रामांशमूर्ध्वतः कार्यमथवा शैलभाजिते ॥ १४ ॥

वलयोत्तरयोर्मध्यं नेत्रं वलययोरपि ।

रामांशमूर्ध्वतः कार्यं स्थानानि वलयस्य तु ॥ १५ ॥

उत्तरादित्यादि । वंशमानमिति । वंशान्तं मानमित्यर्थः । वलयोत्तरयोर्मध्यमिति । उत्तरस्य, तदुपरि स्थितस्य वलयस्य चान्तरमित्यर्थः । नेत्रे द्वे । रामाः त्रयः । ऊर्ध्वत इति । वलयादाधिकं मानमित्यर्थः । उत्तरादुपर्यपि वलयद्वयकरणपक्षे तद्विधिमाह —

अथवेत्यादि । शैलभाजिते, उत्तरादिवंशान्तमान इत्यार्थम् । शैलाः सप्त । वलयोत्तरयोः उत्तरस्य तदुपरितनप्रथमवलयस्य च । वलययोरपि प्रथमवलयस्य द्वितीयवलयस्य च । मध्यम् अन्तरालम् । नेत्रं प्रत्येकं द्वावंशावित्यर्थः । एवं चतुर्ष्वंशेषु विनियुक्तेषु अवशिष्टानां त्रयाणामंशानां विनियोगमाह — ऊर्ध्वत इति । द्वितीयवलयादुपरि वंशान्तं मानमित्यर्थः । एवमेव सर्वासां लुपानां सर्वाण्यपि वलयस्थानानि कर्तव्यानीत्याह — स्थानानीत्यादि ॥ १३ - १५ ॥

अथ वलयेषु सुषिरस्थानं निर्दिशति —

लुपाव्यासेन तुर्यश्रं वलयस्थान आलिखेत् ।

प्रकृतिव्यासतो व्यासमायताश्रं ततो भवेत् ॥ १६ ॥

तस्य कर्णगतं सूत्रं वितानमिति कथ्यते ।

तस्य तिर्यग्गतं सूत्रं लम्बसूत्रं विदुर्बुधाः ॥ १७ ॥

लुपाव्यासेनेत्यादि । अयमर्थः — ध्वजसूत्रे यद्यद् वलयस्थानं कल्पितं, तत्तद् मध्ये यथा स्यात् तथा एकं चतुरश्रं तत्र तत्र पृथक् पृथक् कारयेत् । तस्य दैर्घ्यं तत्तल्लुपानां व्यासेन विस्तारेण तुल्यं स्यात् । तस्य विस्तारश्च प्रकृतिलुपाविस्तारेण समो भवेत् । तथामति आयतचतुरश्राकारेण निष्पन्नस्यास्य चान्तः कर्णसूत्रमास्फालयेत् । अस्य सूत्रस्य वितानमिति संज्ञा । तत्र तिर्यगास्फालितं सूत्रं लम्बसूत्रमिति व्यपदिश्यते इति । अथ तत्र सुषिरं कुर्यादित्यार्थम् । तथाच शिल्परत्ने —

"पूर्वोक्तबिन्दुस्थानेषु चतुरङ्गुलमात्रकम् ।
तुर्यश्रं कल्पयेत् तत्र कर्णसूत्रं समालिखेत् ॥

तत्सूत्रं शिल्पशास्त्रज्ञैर्वितानमिति कथ्यते ।
तस्य तिर्यग्गतं सूत्रं लम्बसूत्रं विदुर्बुधाः ॥

करोतु सुषिरं तत्र वलयस्थानके बुधः ।"

इति । आयतचतुरश्रत्वोक्तेश्चेदं सुषिरस्वरूपं विकृतिलुपानामित्यभ्यूहितुं शक्यम् । तथाच वक्ष्यति—"आयताश्रं तु सुषिरं विकृतीनां ततो भवेद्" इति । परिशेषात् प्रकृतिलुपासुषिरविन्यासः समचतुरश्ररूप इति सिध्यति । तदेतत् 'तुर्यश्रं सुषिरं कुर्याद्' इत्यनेन समनन्तरमेव वक्ष्यति ॥ १६,१७॥

लम्बसूत्राद् गतिस्तस्य वलयस्याथ कथ्यते ।
बहलार्धं तु गमनं कोटौ सर्वत्र कीर्तितम् ॥ १८ ॥

व्यासार्धे यत्र दृश्यन्ते लुपानां पङ्क्तयः कति ।
लुपाबहलतोऽप्यर्धे तावत् पङ्क्तिः प्रकल्प्यते ॥ १९ ॥

तस्य लम्बं समारभ्य उपकोट्यन्तरं तु यत् ।
तत् तस्य गमनं प्रोक्तमेवमन्यत्र कल्पयेत् ॥ २० ॥

पूर्वश्लोके यदुक्तं लम्बसूत्रं नाम तदुपनिबद्धां वलयगतिं सामान्यतः लम्बसूत्रादित्यादिनोक्त्वा प्रकृतिलुपानाम् ऋतुमत्राख्यानां गत्यभावाद् विकृतिलुपानां गतिमानं व्यवस्थापयन् प्रथमं कोटिलुपायास्तदाह — बह-लार्धमित्यादि । बहलं चार्थात् कोटिलुपाया एव । अथ कोटिलुपाया गतिमानमाह — व्यासार्ध इत्यादि । गृहविस्तारार्धमानत्वेन कल्पिता रेखैवेह व्यासार्धशब्देन विवक्षिता । लुपानां पङ्क्तय इति । लुपाः युग्मसङ्ख्या- पङ्क्त्योऽयुग्मसङ्ख्याश्च कल्प्यन्त इति लुपाकरणाध्याये वक्ष्यति । लुपाबहलतोऽप्यर्धे इति । तत्तत्पङ्क्त्यासन्नायास्तत्तल्लुपाया घनार्ध-प्रमाणं मिथोऽन्तरं कृत्वेत्यर्थः । उपकोट्यन्तरमिति । उपकोटिलुपास्था-नावधिकस्यान्तरस्य दैर्घ्यमिति यावत् । शेषं स्पष्टम् ॥ १८—२० ॥

उक्ते चास्मिन् गमने विशेषमाह —

लुपानां प्रकृतिभागे ह्यन्तर्गमनमीरितम् ।
कोटिभागे तु गमनं लम्बसूत्राद् बहिर्गतम् ॥ २१ ॥

लुपानामित्यादि । लुपानां विकृतिलुपानामित्यर्थः । प्रकृतिभाग इति । कोटिव्यतिरिक्तानां विकृतिलुपानां प्रकृतिलुपाभिमुखत्वेन कोटिलुपाभिमुखत्वेन च वर्तनात् तासां प्रकृतिभागः कोटिभाग इति द्वौ भागौ सम्भवत इति मन्तव्यम् । अन्तर्गमनमिति । लम्बसूत्रस्येत्यार्थम् ॥ २१ ॥

अथ वलयसुषिरस्य विस्तारमाह —

तुर्यश्रं सुषिरं कुर्याद् वलयस्य प्रमाणतः ।
चतुर्दशयवं प्रोक्तं प्रायेण वलयं बुधैः ॥ २२ ॥
त्र्यङ्गुलं वात्र कर्तव्यं बाहल्यं द्व्यङ्गुलं तु वा ।
सार्धाङ्गुलं वा कर्तव्यं यथाशोभं यथोचितम् ॥ २३ ॥

तुर्यश्रमित्यादि । तुर्यश्रमिदं प्रकृतिलुपासम्बद्धानामिति निरूपितं पुरस्तात् । प्रमाणत इति । प्रमाणं चेहार्थाद् बाहल्यं ग्राह्यम् । एवञ्च वलयबाहल्यसदृशाः सुषिरविस्ताराः कर्तव्य इत्युपदिष्टं भवति । वलयबाहल्यं कियदित्याकाङ्क्षायामाह — चतुर्दशयवमिति । प्रायेणेति सूचितमर्थं विवृणोति — त्र्यङ्गुलमित्यादि । 'त्र्यङ्गुलं अर्धमात्रं वा द्व्यङ्गुलं सार्धमात्रकम्' इति शिल्परत्ने दृश्यते ॥ २२, २३ ॥

अथ तस्यैवायाममाह —

वलयस्य तु मानेन तुर्यश्रं कारयेद् बुधः ।
अत्र तारार्धगानां तु लुपानां सूत्रमालिखेत् ॥ २४ ॥
लुपासूत्रायतं यावत् तावत् स्यात् सुषिरायतम् ।
आयताश्रं तु सुषिरं विकृतीनां ततो भवेत् ॥ २५ ॥
आयतं सुषिरस्यास्य नोर्ध्वाधस्तिर्यगेव हि ।

**वलयस्य** त्वित्यादि । मानेन घनेनेत्यार्थम् । **तारार्धगानामिति** । गृहविस्तारार्धत्वेन कल्पितायां रेखायां सम्पातितानामित्यर्थः । **लुपासूत्रायतनमित्यादि** । वलयघनमानेन कल्पितेऽस्मिन् तुर्यश्रे प्रसारितानां तारार्धगतलुपासूत्राणामायतिरेव तत्तद्वलयसुषिरायतिरित्यर्थः । विकृतिलुपाविषये तथा आस्फालितेषु सूत्रेषु निष्पन्नं सुषिरसन्निवेशमाह — **आयताश्रमित्यादि** । अत्रापि विशेषमाह — **आयतामित्यादि** । अस्य आयताश्ररूपस्य । आयतम् आयतिः । नोर्ध्वाधः, किन्तु तिर्यगेवेति योजना ॥ २४, २५½ ॥

उक्तं वलयसुषिरकरणन्यायम् उत्तरे लुपाघटनार्थसुषिरकरणेऽप्यतिदिशति —

उत्तरेण लुपानां तु संयोगो यत्र जायते ॥ २६ ॥
तत्राप्येवं विधातव्ये लम्बसूत्रवितानके ।

**उत्तरेणेत्यादि** । लम्बसूत्रवितानके लम्बसूत्रं वितानसूत्रं चेत्यर्थः । अनयोर्विधानं तत्स्वरूपं च पूर्वं प्रकटितम् ॥ २६, २६½ ॥

अथ तत्रैताभ्यामेव सूत्राभ्यां सन्धौ लुपागमनं सुषिरगमनं च व्यवस्थापयेदित्याह —

चूलिकानां लुपायोगे तिर्यक्सूत्राणि पातयेत् ॥ २७ ॥
लुपानां लम्बसूत्राच्च चूलितिर्यग्गतावपि ।
गमनं विहितं तद्वद् वलयस्य यथा स्मृतम् ॥ २८ ॥

**चूलिकानामित्यादि** । चूलिका लुपाधारभूतम् उत्तरम् । **पातयेदिति** । चूलिकायामित्यार्थम् । **लुपानामित्यादि** । सन्धिस्थाने लम्बसूत्रात् लुपानां गमनं, सन्धिसुषिरगमनप्रयोजकस्य चूलीतिर्यक्सूत्रस्य गमनं च वलयस्येव विहितं वलयस्य घनेन यथा तत्सुषिरगमनं लम्बसूत्रात् तस्य गतिश्च पूर्वं निरणायि तथा अत्र उत्तरघनप्रमाणेन तत्सन्धिसुषिरगमनं लम्बसूत्राल्लुपागमनं च विहितमित्यर्थः । सुषिरगमनं चार्थात् सुषिरायतिरेव भवति । सन्धिस्थाने सुषिरकरणं च लुपायामुत्तरे च तुल्याकारमित्यवगन्तव्यम् । 'चूलितिर्यग्गतादपी'ति पाठान्तरम् ॥ २७, २८ ॥

अथ तयोः सन्धिस्वरूपं विवेचयति —

उत्तरेण लुपानां वै सन्धानं चार्धपाणिकम् ।
लुपानां कूटसन्धानं वेणुपर्वाभिधं भवेत् ॥ २९ ॥

उत्तरेणेत्यादि । उत्तरसन्धिप्रसङ्गात् तासां कूटसन्धिस्वरूपमप्याह — लुपानामित्यादि । लुपानां वलपार्श्वसन्धाने विशेषाभावात् तदिह न प्रकटितम् । अर्धपाणिकसन्धेः स्वरूपमष्टमाध्याये प्रदर्शितम् । वेणुपर्वसन्धिस्तु —

"चतुर्भिः पञ्चभिर्द्व्यैस्त्रिचतुरस्रन्वयः क्रमात् ।
वेणुपर्वमिति प्रोक्तं तैतिलानां नृणां गृहे ॥"

इति मयमते निरूपितः । कूटस्वरूपलक्षणादिकं तु द्वादशाध्याये वक्ष्यति ॥ २९ ॥

इति पारशुनियालघुविवृतौ लुपाप्रमाणरचनं नाम
दशमोऽध्यायः ।

---

## अथ लुपाकरणं नामैकादशोऽध्यायः ।

अथ लुपानिर्मित्युपदेशायाध्यायान्तरमारभते —

अथवा मन्दबुद्धीनां क्रियालाघवसिद्धये ।
निम्नोन्नतविहीनायां फलकायामथालिखेत् ॥ १ ॥

अथवेत्यादि । अथवेत्यनेन लुपाप्रमाणनिर्णयपरिपाट्यैव तन्निर्माणसाधनमपि सूक्ष्मधियां सम्पादयितुं शक्यमिति सूचयति । अत एव मन्दबुद्धीनामित्याह । मन्दबुद्धीनां परिचयाभावादुपेक्षितं तन्निर्माणसाधनं विवेक्तुमसमर्थानां गणितज्ञानविधुराणां साधारणजनानामित्यर्थः । क्रियालाघवसिद्धये लघ्व्या क्रियापरिपाट्या तत्प्रमाणादिकमवगन्तुम् । निम्नोन्नतविहीनायामिति । फलकाया दन्तुरत्वे हि लिख्यमानानां मानसाधनीभूतानां रेखाणां वैषम्यहेतुकः प्रमाणन्याकुलीभावः स्यादिति भावः । तत्र श्लक्ष्णतापि लेखनमौकर्याय कार्येत्यपत्र द्रष्टव्यं ॥ १ ॥

लेखनप्रकारमेवाह —

**इष्टमानेन ताराधं वेश्मनः संलिखेद् बुधः ।**

**विस्तारार्धं तु वंशोच्चं शालायाः प्रायशः स्मृतम् ॥ २ ॥**

**इष्टमानेनेत्यादि** । **संलिखेदिति** । रेखाकारेणेत्यर्थम् । शालाया विस्तारार्धमिति सम्बन्धः । **वंशोच्चमिति** । लुपामध्यसङ्घटनस्थानभूतात् पर्यन्तोत्तरात् लुपाप्रयोगस्थानभूतवंशान्तं मानमित्यर्थः । एवञ्च वेश्मविस्तारार्धरूपेण या रेखा फलके तिर्यङ् निवेशिता, तन्मानम्, उत्तराद् वंशान्त मानं भवतीति निश्चितमित्यभिप्रायः । **प्रायश** इत्यनेन देवालये क्वचिन्मनुष्यालये चास्य न्यायस्याप्रवृत्तिर्दृश्यत इति सूचयति । तत्प्रकारो **मयमतादि**तोऽवगन्तव्यः ॥ २ ॥

अथैवं तिर्यग् लिखिताया वेश्मतारार्धरेखाया एकस्मात् मान्तादारभ्य उत्तराधिष्ठानमान्तान्तलुपायामसाधनत्वेन कापि रेखा फाल्गुनीत्यभिप्रायेण तदायामं व्यवस्थापयति —

**पादार्धं नीव्रलम्बं च प्रायेण कथितं बुधैः ।**

**पादायामं विभज्याथ नन्दशैलशराश्विभिः ॥ ३ ॥**

**अब्धिरामाश्विसोमांशैः क्रमान्नीव्रस्य लम्बनम् ।**

**पादार्धमित्यादि** । पादः स्तम्भः । स्तम्भदैर्घ्यं यावत् कल्पितं तदर्धं नीव्रलम्बमानं स्यादिति साधारणो नियमः । विशेषस्तूच्यते — **पादायाममित्या**दिनैकेन श्लोकेन । आयामो दैर्घ्यम् । नन्दाः नव । शैलाः सप्त । शराः पञ्च । अश्विनौ द्वौ । अब्धयः चत्वारः । रामाः त्रयः । सोम एकः । **क्रमा**दिति । अयं क्रमः — पाददैर्घ्ये नवधा विभक्ते चतुर्भिरंशैर्नीव्रलम्बः कार्य इत्येकः प्रकारः । तस्मिन् सप्तधा विभक्ते त्रिभिरंशैः स कार्य इत्यपरः । पञ्चधा विभक्ते तस्मिन् द्वाभ्यामंशाभ्यां, द्विधा विभक्ते एकेनांशेन च स विधेय इति तृतीयचतुर्थप्रकाराविति ॥ ३, ३-॥

इष्टमानेन कल्पितस्योत्तरविष्कम्भस्य मानेनापि कापि रेखा तारार्धरेखाया अधो योजनीयेत्याह —

**उत्तरस्य तु विष्कम्भं बुद्ध्या निश्चितमालिखेत् ॥ ४ ॥**

उत्तरस्येत्यादि । इह विष्कम्भशब्देन घनं विवक्षितमिति साम्प्रदायिकाः । ४ ॥

तस्या एव पूर्वमुक्ताया गृहतारार्धरेखायाः प्रान्तान्तरादारभ्योर्ध्वाग्रा कापि रेखा आस्फालनीया । सा च उत्तराद् वंशान्तलुपायामप्रमाणप्रमिता स्यादित्याह —

व्यासार्धेऽप्यूर्ध्वगां रेखां यावद्वंशायतां लिखेत् ।
तयोः कर्णगतं सूत्रं वंशान्नीव्रान्तमालिखेत् ॥ ५ ॥

व्यासार्धेऽपीत्यादि । अथैतद्रेखाया अग्राद् वंशस्थानभूतादारभ्य पूर्वलिखितनीव्रान्तरेखापर्यन्तमेकां रेखां लिखेदित्याह — तयोरित्यादि । तयोः गृहतारार्धरेखायाः वंशोच्चरेखायाश्चेत्यर्थः । कर्णगतमिति । एतेन त्र्यश्रक्षेत्रमिदं जातमिति सिध्यति । अत्र तिर्यक्कृता भुजारेखा गृहविस्तारार्धात्मिका, ततः ऊर्ध्वाग्रत्वेन प्रसारिता कोटिरेखा उत्तरादिवंशान्तलुपप्रमाणभूता, वंशस्थानादधो नीव्रान्तं प्रसारिता कर्णरेखा वंशान्नीव्रान्तलुपायामप्रमितेति फलति ॥ ५ ॥

अथास्मिन् त्र्यश्रक्षेत्रे लुपास्थानकल्पनोपयोगि पङ्क्तिकरणमाह —

भुजाकोट्यन्तरालेन पङ्क्तिभेदान् प्रकल्पयेत् ।
वंशादारभ्य नीव्रान्तं प्रत्येकं पङ्क्तिषु क्रमात् ॥ ६ ॥
पङ्क्तिमध्येषु सूत्राणि सर्वेष्वपि समालिखेत् ।

भुजेत्यादि । भुजाकोटिसूत्रयोः स्वरूपं पूर्वं प्रकटितम् । पङ्क्तिभेदानिति । पङ्क्तयो हि लुपान्तरालव्यवच्छेदाय क्रियन्ते । *एकस्या लुपायाः अध्यर्धा पङ्क्तिः, द्वयोर्लुपयोर्धोनास्तिस्रः पङ्क्तयः* इत्यादिस्तत्कल्पनक्रमः शिल्पिभिः क्रियते । एवं तत्तल्लुपानां पृथक् पृथक् पङ्क्तिषु निवेशितासु, तन्मध्येषु सर्वेष्वपि लुपाकाराणि सूत्राण्यास्फालयेदित्याह — पङ्क्तिमध्येष्वित्यादि । कुत आरभ्य किमवधिकं तदास्फालनीयमित्याकाङ्क्षायामाह — वंशादारभ्य नीव्रान्तमिति । पूर्वप्रस्तुते त्र्यश्रक्षेत्रे कोटिकर्णसूत्रयोर्योगस्थानं वंशः । नीव्रं च भुजाकर्णयोगस्थानादधः प्रसारितं सूत्रमिति ज्ञेयम् ॥ ६,६½ ॥

कूटस्य लम्बसूत्रस्य समीपतरवर्ति यत् ॥ ७ ॥
गणयित्वा तदायामं यत् प्रमाणं तदुत्तरे ।
सन्निधाप्य तु तस्यान्ते कर्णसूत्रं समालिखेत् ॥ ८ ॥
लम्बसूत्रोपसूत्रस्य समीपतरवर्ति यत् ।
तन्मानं पूर्ववत् स्थाप्य लम्बसूत्रादि चोत्तरे ॥ ९ ॥
तदन्तेऽप्यालिखेत् कर्णं पुनरन्यत् ततोऽपरम् ।

अथैतेषु पङ्क्तिमध्यपातितेषु लुपासूत्रेषु लम्बसूत्रात्मककोटिसूत्रसमीपतरवर्तिनो लुपासूत्रस्य प्रमाणमाकलय्य तत्प्रमाणकं किमपि भुजासूत्रं तत्रान्तादेवारभ्यास्फालयेत् । अथ यत् त्र्यश्रक्षेत्रे वंशस्थानं कल्पितं, तत आरभ्य एतद्भुजासूत्रावसानान्तमेकां कर्णाकारां रेखां लिखेत् । तदा इदमप्येकं त्र्यश्रक्षेत्रं जातम् । अनेनैव प्रकारेण यथाक्रममन्येषामपि पङ्क्तिमध्यप्रविष्टानां तत्तल्लुपासूत्राणाम्, अन्तिमस्य कर्णसूत्रस्य च प्रमाणं तत्तद्भुजासु यथा स्यात् तथा परिकल्प्य वंशस्थानादेवारभ्य तत्तत्कर्णरेखा अपि प्रसार्य एकैकं त्र्यश्रक्षेत्रं कल्पयेदित्यभिप्रायेणाह— कूटस्येत्यादि । कूटस्य लम्बसूत्रस्येति । पूर्वलिखिते त्र्यश्रक्षेत्रे कोटिसूत्रस्यैव कूटसूत्रमिति लम्बसूत्रमिति च व्यवहारः कृतः । एवं भुजासूत्रस्यैवोत्तरमिति संज्ञात्र कृता । 'लम्बसूत्रादि चे'त्यस्य स्थाने 'लम्बसूत्रादिने'ति क्वचित् पाठः । अन्यत् स्पष्टम् ॥ ७—९ ॥

कूटोत्तराग्रयोः कर्णं गतां तां प्रकृतिं विदुः ॥ १० ॥
तन्मानभुजया कर्णरेखा या लिखिता पुरा ।
सा रेखा शिल्पशास्त्रज्ञैः कोटिरित्यभिधीयते ॥ ११ ॥
तदन्तरालगा याश्च उपकोट्यादयः स्मृताः ।

अथैवं कल्पितेषु त्र्यश्रक्षेत्रेषु गृहविस्तारार्धमानं भुजायां परिकल्प्य वंशोच्चमानं कोटौ च परिकल्प्य यत् त्र्यश्रक्षेत्रं पूर्वं कल्पितं, तस्य कूटोत्तराग्रयोः भुजाकोट्यग्रयोः या कर्णरेखा निवेशिता, तां प्रकृतिम्, अर्थात् प्रकृतिलुपादैर्घ्यं विदुः । अथ च तस्या कर्णरेखाया मानं भुजायां परिकल्प्य अवान्तरत्र्यश्रक्षेत्रकरणप्रसङ्गे यत् त्र्यश्रक्षेत्रं कल्पितं, तस्य या

कर्णरेखा वंशस्थानात् प्रसारिता, तस्या मानं कोटिलुपादैर्घ्यम् अर्थात् कोटिलुपादैर्घ्यमानसाधनं भवति। एतयोरन्तरालगताः याः अवान्तरत्र्यश्र-क्षेत्रकर्णरेखाः, ताः उपकोट्यादयः — कोटिलुपासमीपस्था उपकोटि-लुपा, तत्समीपस्था द्वितीया लुपा, तत्सन्निकृष्टा तृतीया लुपा, इत्येवं क्रमेण प्रकृतिलुपान्ता उपकोट्यादयः — गणनीयाः स्मृताः इत्येवमर्थकं श्लोकद्वयमाह—कूटोत्तराग्रयोरित्यादि । 'तन्मानभुजयोरि'ति क्वचित् पाठः। एवं तावत् सर्वासां लुपानां सुसूक्ष्मं दैर्घ्यं साधितम् ॥१०—११½॥

अथैतासां विस्तारं साधयति—

उत्तरस्य त्वधोदेशे सूत्रद्वितयमालिखेत् ॥ १२ ॥
प्रकृतिव्याससदृशं विकृतिव्याससिद्धये ।
लम्बसूत्रकमारभ्य कर्णसूत्रगतं तु तत् ॥ १३ ॥
लम्बादिकर्णपर्यन्तसूत्राणां यद्यदायतम् ।
सूत्रयोरन्तरस्थानां तत्तद्व्यासा लुपाः स्मृताः ॥ १४ ॥

उत्तरस्येत्यादिना । तत्तद्व्यासा लुपाः स्मृताः इत्यन्तेन प्रतिपादितस्यायमभिप्रायः—विकृतिलुपानां कोट्यादीनां विस्तारनिर्णयार्थैषा प्रक्रिया। अवान्तरत्र्यश्रक्षेत्रकरणात् पूर्वं लिखितस्य त्र्यश्रक्षेत्रस्याधस्तनोत्त-राख्यभुजासूत्रस्याधः कल्प्यप्रकृतिलुपाव्याससदृशमिथोन्तरालमानं सूत्रद्वय-मालिखेत् । अनयोः सूत्रयोरवधिरेकत्र कोटिसूत्रात्मकं लम्बसूत्रम्, अन्यत्र कर्णसूत्रं च स्यात् । अथ लम्बकर्णसूत्रयोरन्तरालपातितानि लुपाकाराणि सूत्राणि सर्वाण्यप्येतयोरन्तः प्रवेशयेत् । तत्रैतत्सूत्रद्वयमध्यप्रविष्टानामेषां लुपासूत्राणां योऽयमायामः, स एव तत्तल्लुपानां पृथक् पृथग् विस्तारमान-साधनं भवतीति । अवान्तरत्र्यश्रक्षेत्राणामेव भुजारेखायामेतत् सूत्रद्वयं लिखेदिति केचित् साम्प्रदायिका वदन्ति । मूलार्थस्तूभयोः पक्षयोः समानो दृश्यते । सूत्रयोरन्तरस्थानामिति । उत्तरसूत्रस्याधो निवेशितयोः सूत्रयोर्मध्यप्रविष्टानामित्यर्थः । इदं च लम्बादिकर्णपर्यन्तसूत्राणामित्यस्य विशेषणम्। तानि च सूत्राणि लुपात्वेन कल्पितानीति समनन्तरमेवोक्तम् । शेषं स्पष्टम् ॥ १२—१४ ॥

अथ शिष्यबुद्धिवैशद्याय प्रकारान्तरेणापि लुपादैर्घ्यं साधयति —

कर्णसूत्रादिकोट्यन्तं सूत्रद्वितयमालिखेत् ।
सूत्रयोरन्तरं त्वत्र चतुरङ्गुलमिष्यते ॥ १५ ॥
कर्णादिकोटिपर्यन्तसूत्राणां यद्यदायतम् ।
तयोरन्तरसंस्थानां तत्तदायामसाधनम् ॥ १६ ॥

कर्णसूत्रादीत्यादि । इह कर्णः प्रकृतिलुपात्वेन पूर्वमुक्ता प्रधान-व्यश्रक्षेत्रमध्या कर्णरेखा ग्राह्या । कोटिश्च कोटिलुपादैर्घ्यसाधनत्वेन पूर्वं प्रद-र्शिता कर्णरेखा । ततश्च प्रकृतिलुपाया आरभ्य कोटिलुपावधिकं सूत्र-द्वयमुत्तराख्यभुजासूत्रस्योपर्यधो वा प्रसारयेत् । तयोर्मिथोऽन्तरमान चतु-रङ्गुलं स्यात् । तत्र प्रविष्टानां प्रकृत्यादिकोटिपर्यन्तसूत्राणां यद्यद् दैर्घ्यं भ-वति, तत्तदेव तत्तल्लुपादैर्घ्यमानसाधनं स्यादिति समुदितोऽर्थः । 'तयोरन्तर-संस्थानामि'त्यस्य कर्णादिकोटिपर्यन्तसूत्राणामित्यनेन सम्बन्धः ॥१५,१६ ॥

अथ लब्धेनानेन मानसाधनेन तत्तल्लुपायामनिष्पादनप्रकारं प्रस्तौति—

ताराधें हस्तमानं चेन्मानषट्कमिता लुपा ।
त्रैराशिकेन विज्ञेया ह्यूने चाप्यधिके बुधैः ॥ १७ ॥

ताराधमित्यादि । अस्यार्थः — गृहविस्तारार्धम् एकहस्तमितं चेद् आयामसाधनं षड्गुणं कृत्वा उत्तराद् वंशान्तानां लुपानां दैर्घ्यं प्रक-ल्पयेत् । एवमेव उत्तराग्रीवान्तलुपादैर्घ्यकल्पनेऽपि क्रमः । अस्माद् न्यूनातिरेकभावे तु कर्तव्यतया प्रसक्ते तत्र विधिस्त्रैराशिकेनावगन्तव्यः । एकाङ्गुलाधिकैकहस्तमिते तस्मिन् लुपायामसाधनं पादाधिकषट्कमितं कल्प्यम् । एवमुपर्यपीति तद्विदः इति ॥ १७ ॥

आसु लुपासु वलयसुषिरायामादिकं साधयति—

उत्तरस्योर्ध्वतः क्वापि रेखाद्वितयमालिखेत् ।
वलयस्य तु बाहल्यं समं स्यादन्तरं तयोः ॥ १८ ॥
लम्बादिकर्णपर्यन्तसूत्राणामभितः पृथक् ।
सूत्राणि बहलार्धेन लुपानां कीर्तितानि वै ॥ १९ ॥

वलयस्य तु सूत्रेण कर्णसूत्रयुतिर्यतः ।
तत आरभ्य पार्श्वस्थसूत्रान्तं तिर्यगालिखेत् ॥ २० ॥
तदन्तर्गतसूत्रेष्वप्येवमेव समालिखेत् ।
लम्बसूत्रे विशेषो न तिर्यग्वलयसूत्रयोः ॥ २१ ॥
गतिमानं तु सर्वत्र वलये तिर्यगन्तरम् ।
वलयार्थं तु कृतयोः सूत्रयोरन्तरं तु यत् ॥ २२ ॥
तदन्तरे स्थितानां तु लुपानां यद्यदायतम् ।
सुपिरायाममानानि कीर्त्तितानीह तानि वै ॥ २३ ॥

उत्तरस्येत्यादीनां कीर्त्तितानीह तानि वै इत्यन्तानां षण्णां श्लोकानाम् अयमत्र समुदितोऽर्थः — भुजासूत्रस्योत्तरमिति संज्ञा कृते त्युक्तं पुरस्तात् । तस्य भुजासूत्रस्योर्ध्वभागे यत्र क्वापि तिर्यक् सूत्रद्वय-मास्फालनीयम् । इदं च वलयस्थानात्मकत्वाद् वलयसूत्रमेव भवति । तयोः सूत्रयोः अन्तरालमानं वलयघनमानेन तुल्यं कल्प्यम् । अथ च तत्रस्थलम्बादिकर्णसूत्रपर्यन्तानां लुपारेखाणामुभयपार्श्वेऽपि लुपाघनार्धमन्त-रालं प्रकल्प्यैकैकां रेखां विलिख्यैतत्सूत्रद्वयस्यान्तः प्रवेशयेत् । ततश्च वलयरेखया तत्तल्लुपाकारकर्णसूत्रयोगो यत्र यत्र भवति, ततस्तत आरभ्य तत्तल्लुपापार्श्वसूत्रान्तमन्यदपि तिर्यक्सूत्रं निवेशनीयम् । कोट्याख्यलम्ब-सूत्रविषये तु पार्श्वरेखाया अभावात् तिर्यग्वलयसूत्रकृतो विशेषो न भवति । यदत्र वलयकर्णसूत्रयोगस्थानात् पार्श्वसूत्रान्तं तिर्यक्सूत्रं प्रसारितं, तद्दैर्घ्य-मानं तत्र तत्र वलये गतिमानसाधनं भवति । अथ वलयघनमन्तरालं प्रकल्प्य यदुत्तरोपरि वलयसूत्रद्वयं निवेशितं, तदन्तरे प्रविष्टानां लुपारेखाणां यद्यद् दैर्घ्यं भवति, तत्तदेव तत्तल्लुपावलयसुपिरायामसाधनं भवतीति । केचित् 'लम्बसूत्रे विशेषो न तिर्यग्वलयसूत्रयोः' इत्यस्य वाक्यस्य 'लम्बसूत्रविषये परं तिर्यग्वलयसूत्रयोरपृथग्भावः सिध्यती'त्यर्थं वर्णयन्ति । 'वलयार्धे तु' इति क्वचित् पाठः । शेषं सुगमम् ॥ १८--२३ ॥

व्यासार्धसूत्रयोर्मध्ये सूत्रमेकं निधापयेत् ।
अधःसूत्रान्मध्यसूत्रं चूलिकाव्यासमानतः ॥ २४ ॥
तत् सूत्रं शिल्पशास्त्रेषु ध्वजसूत्रं विदुर्बुधाः ।
ध्वजसूत्रादधोभागं लुपाभ्यन्तरमिष्यते ॥ २५ ॥
कर्णादिकोटिसूत्रान्तं सूत्राणां पार्श्वयोः पृथक् ।
लुपानां व्याससदृशं प्रत्येकं त्वपरं स्मृतम् ॥ २६ ॥
पुरा लिखितसूत्राणि ध्वजसूत्राणि कल्पयेत् ।
ध्वजाभ्यन्तरयोर्मध्ये यद्यन्मानानि तान्यपि ॥ २७ ॥
वितानलम्बसूत्राणां मानानीति विदुर्बुधाः ।

अथ लुपास्वामूलाग्रं ध्वजवितानलम्बाख्यं सूत्रत्रयं वलयसुषिरकरण-निम्नीकरणाद्यर्थं तत्तत्प्रमाणव्यवस्थापनाय तत्र तत्र कल्पयन्ति शिल्पि-वराः । अतस्तत्सूत्रत्रयमानसाधनं प्रदर्शयति — **व्यासार्धे**त्यादिभि-रर्धाधिकैश्चतुर्भिः श्लोकैः । इह व्यासः अर्थाल्लुपासम्बद्ध एव । **अधः सूत्रान्मध्यसूत्रमिति** । अधस्सूत्रमध्यसूत्रयोरन्तरालमानमित्यर्थः । चूलिका पर्यन्तोत्तरम् । तत्सूत्रं मध्यसूत्रम् । **लुपाभ्यन्तरमिति** । लुपानामभ्यन्तरो भागः, वलयसुषिरादिनिवेशनप्रदेश इति यावत् । 'ध्वजा-भ्यन्तरमि'ति पाठान्तरम् । **कर्णादिकोटिसूत्रान्तमिति** । इह कर्णसूत्रं प्रकृतिलुपाप्रमाणसाधनभूतं त्र्यश्रक्षेत्रस्थमिति ज्ञेयम् । सूत्राणां कर्णाकारेण वर्तमानानां तत्तल्लुपासूत्राणाम् । **अपरमिति** । 'अन्तरम्' इति पाठान्तरम् । पुरा लिखितसूत्राणि ध्वजसूत्रेभ्यो व्यतिरिक्तानि मध्यसूत्राणी-ति साम्प्रदायिकाः । **ध्वजसूत्राणि कल्पयेदिति** । समनन्तरमुक्तानि मध्यसूत्राणि ध्वजसूत्राणां स्थाने यथा स्युः, तथा कल्पयेदित्यर्थः । **मानानीति विदुरिति** । सर्वत्रेति शेषः । अयं तु ऋजुः पन्थाः—

"कृत्वा वेदाङ्गुलाभ्यश्रकमखिललुपापार्श्वयोर्मध्यसूत्रे
तद्वेदाश्रोत्थकर्णद्वितयमिह वितानं च लम्बं च विद्यात् ॥"

इति । इह कचिन्मातृकायां 'व्यासार्धसूत्रयोरि'त्यारभ्य 'मानानीति विदु-र्बुधाः' इत्यन्ताः श्लोका न दृश्यन्ते ॥ २४ — २७½ ॥

मषीमिलितसूत्रेण लुपाफलकपार्श्वयोः ॥ २८ ॥
ध्वजसूत्रं प्रकर्तव्यं सर्वासां शिल्पकोविदैः ।

**मषीमिलितेत्यादि** । इदं च इतरसूत्रेभ्यो ध्वजसूत्रं विशेषयितुमिति मन्तव्यम् ॥ २८, २८½ ॥

वितानलम्बयोर्मानं ध्वजसूत्रादि विन्यसेत् ॥ २९ ॥
मानाग्रोदरसंयोगौ जायेते दशयोर्ययोः ।
तत्र बिन्दू विधातव्यौ मूलयोगे च विन्यसेत् ॥ ३० ॥
कुक्षिस्थध्वजयोगेन पृष्ठान्तं सूत्रमालिखेत् ।
तद्वत् तिर्यग्गतं चैकमेवं पार्श्वान्तरेऽपि च ॥ ३१ ॥

**वितानलम्बयोरित्यादि** । ध्वजसूत्रादि ध्वजसूत्रमारभ्येत्यर्थः । **मानाग्रोदरसंयोगाविति** । इह मानशब्देन वितानलम्बसूत्रयोः प्रमाणसाधनं विवक्षितम् । उदरं च लुपाभ्यन्तरभागः । दशा अग्रम् । **मूलयोगे चेति** । मानसाधनसूत्रस्य मूलभागेन कोट्यात्मतां प्राप्तस्य ध्वजसूत्रस्य योगो यत्र भवति, तत्रापीत्यर्थः । विन्यसेद्, बिन्दुमित्यार्थम् । **पृष्ठान्तं सूत्रमालिखेदिति** । इदं च सूत्रं तत्र कर्णसूत्राकारेण जायत इति तद्विदः । **तद्वदिति** । लम्बवितानसूत्रयोरास्फालनप्रकारो यथा प्रदर्शितः, तथेत्यर्थः । **पार्श्वान्तरेऽपीति** । लुपाफलकस्येत्यार्थम् ॥ २९—३१ ॥

उक्तविधया सर्वासामपि लुपानां तत्तत्स्थानेषु लम्बवितानसूत्रे समालिख्य लम्बसूत्रगतिप्रमाणानुरोधं यथायथं नीत्वा सुषिरस्य गमनादि निर्णीय वलयघनप्रमाणेन विस्तारं च प्रकल्प्य तत्र तत्र तत्सुषिरं कुर्यादित्याह —

सर्वासामपि पूर्वोक्तस्थानेष्वेवं समालिखेत् ।
गतिमानेन गमनं पूर्ववत् परिकीर्त्तितम् ॥ ३२ ॥
आयाममुक्तमानेन व्यासं वलयमानतः ।
सुषिरं वलयस्यैवं कुर्याच्छास्त्रविशारदः ॥ ३३ ॥

**सर्वासामित्यादि** ॥ ३२, ३३ ॥

अथ उत्तरपट्टिकायां लुपानिवेशननियममाह —

अधोमूलाश्चोर्ध्वकेशा लुपाः सर्वाः प्रकीर्त्तिताः ।
स्वस्वाध्यर्धशैकसहितं पुच्छव्यासमुदाहृतम् ॥ ३४ ॥

अधोमूला इत्यादि । मूलं नीव्रपट्टिकासङ्घटनस्थानम् । ऊर्ध्वकेशाः ऊर्ध्वाग्राः । ऊर्ध्वं च वंशपार्श्वे कूटे वा य युज्यते, स प्रदेशः । स्वस्वविस्तारात् चतुर्थांशाधिकेन पुच्छविस्तारेण युक्ताश्च ता लुपाः कार्या इत्याह — स्वस्वाध्यर्धशेत्यादि ॥ ३४ ॥

लुपामूलोल्लिखितवितानसूत्राभिमुखं हेयांशं छिन्द्यात्, अवशिष्टे भागे निम्नीकरणादिप्रयोजकं तक्षणं समाचरेदित्याह —

लुपामूले च कर्तव्यं सूत्रमेकं वितानकम् ।
छिन्द्यात् परशुना तत्र पश्चात् तक्षणमाचरेत् ॥ ३५ ॥

लुपामूले चेत्यादि ॥ ३५ ॥

किञ्च, लुपामूलस्थवितानसूत्रामादारभ्य लुपाघनप्रमाणेन तिर्यक्सूत्रमेकं लुपाकुक्षौ विलिख्य तत्प्रान्तादप्यपरं तिर्यक्सूत्रं वितानसूत्रवत् समास्फाल्य, अस्य सूत्रस्य मूलादारभ्य तदुपान्तस्थप्रथमवलयलम्बसूत्रपर्यन्तं लुपाप्रान्तभागं छित्त्वा हेयं परित्यज्य तत्र यवद्वयप्रमाणेन निम्नतामापादयेदित्याह —

लुपामूले वितानाग्रे तिर्यक् कुक्षौ समालिखेत् ।
लुपाबहलतुल्यं तदायतं परिकीर्त्तितम् ॥ ३६ ॥
तस्य तिर्यग्गतं चापि वितानवदथालिखेत् ।
निम्नं तत्र प्रतिकर्तव्यं यवद्वितयमानतः ॥ ३७ ॥
तावच्छित्त्वा परित्याज्यं यावद् वलयलम्बतः ।
एवं वलययोर्मध्ये वलयोत्तरयोरपि ॥ ३८ ॥

लुपामूले इत्यादि । अमुमेव निम्नतापादनप्रकारं वंशान्तयावद्वलयमध्यनिम्नीकरणेऽप्यतिदिशति — एवमित्यादि । निम्नभागसन्निवेशं तूपरि स्फुटीकरिष्यति ॥ ३६—३८ ॥

एवं वलयान्तरालनिम्नतापादनेन तदुपान्तेषु पर्वाकाराः खण्ड्यः सञ्जायन्ते । तासु उत्तरोपान्तस्थायाः खण्ड्या आयामः खण्ड्यन्तरापेक्षया त्रिगुणः स्यादित्याह —

वलयोपान्तखण्डी या तूत्तरे त्रिगुणा स्मृता ।
पूर्ववच्चोर्ध्वतः कुर्यान्निम्नं चापि तथैव च ॥ ३९ ॥

वलयोपान्तेत्यादि । पूर्ववच्चेत्यादि स्पष्टार्थम् ॥ ३९ ॥

उत्तरोपरितनवलयान्तराले यन्निम्नीकरणमुक्तं, तत्र विशेषमाह —

वंशोपान्तवितानान्तं वलयान्निम्नमिष्यते ।

वंशोपान्तेत्यादि । वलयात्, तृतीयादित्यार्थम् । आरभ्येति शेषः ॥ ३९½ ॥

वंशपार्श्वे सन्धातव्यानां लुपामाणा तक्षणप्रकारमाह --

वितानाभ्यन्तराग्रे तु सूत्रमूर्ध्वमुखं लिखेत् ॥ ४० ॥
सूत्रादूर्ध्वं परित्याज्यं व्याससङ्कोचमिष्यते ।
ध्वजाद् बहिर्गतं त्याज्यं सज्यचापाकृतिर्भवेत् ॥ ४१ ॥

**वितानेत्यादि । वितानाभ्यन्तराग्र इति ।** ध्वजाख्यवितानसूत्रस्य तदधस्तनलुपापार्श्वसूत्रस्य च यदन्तरं मध्यभागः, तद् वितानाभ्यन्तरम् । तस्याग्रभागे इत्यर्थः । सूत्रं लम्बाख्यम् । तस्य लम्बसूत्रस्यान्ते अग्रविस्तारचतुर्थांशविस्तीर्णां शिखां कृत्वा अवशिष्टमग्रं छिन्द्यादित्याह — **सूत्रादूर्ध्वं परित्याज्यमिति** । यथोचिततक्षणेन सज्यचापाकृतिर्यथा भवेत्, तथा तत्र लुपाग्रविस्तारमपि सङ्कोचयेदित्याह — **व्याससङ्कोचमिष्यत इति** । क्लीबत्वमार्षम् । तथा व्याससङ्कोचने प्रसक्ते ध्वजसूत्राद् बहिर्गतोंऽशः त्यजनीयः स्यादित्यभिप्रायेणाह — **ध्वजाद् बहिर्गतं त्याज्यमिति** ॥ ४०, ४१ ॥

वलयमध्येषु यो निम्नभागः पूर्वं कल्पितः, तस्यापि सन्निवेशमाह —

कुक्षिनिम्नं च सर्वासां तद्वदेव प्रकीर्त्तितम् ।
अर्धचन्द्राभमेवैतदित्याहुस्तदथापरे ॥ ४२ ॥

कुक्षिनिम्नमित्यादि । सर्वासां, लुपानामित्यर्थः । तद्वदेव सज्यचापसन्निवेशेन तुल्यमेव । तत्र पक्षान्तरमाह — अर्धचन्द्राभमित्यादि । एतत् कुक्षिनिम्नम् ॥ ४२ ॥

लुपाशिखोर्ध्वभागसन्निवेशमाह —

पुच्छाकारं तथैव स्यादुत्तानधनुषा समम् ।
नीव्रान्तकुक्षिनिम्नं तु जङ्घापृष्ठवदाचरेत् ॥ ४३ ॥

पुच्छाकारमिति । 'पुच्छाकार' इति तु युक्तः पाठः । पुच्छस्याकार इति षष्ठीतत्पुरुषः । शिखा पुच्छमिति पर्यायः । कुक्षिनिम्नं सर्वं सज्यचापाकृतिर्भवेदित्युक्तं पुरस्तात् । तत्र नीव्रोपान्तकुक्षिनिम्नसन्निवेशविषये विशेषमाह — नीव्रान्तेत्यादि ॥ ४३ ॥

नीव्रान्तकुक्षिनिम्नसन्निवेशे परं विशेषकथनाद् निम्नान्तरसन्निवेशविषये सज्यचापाकृतित्वमर्थसिद्धमपि स्फुटप्रतीतये आह —

तदूर्ध्वमेव चापाभं नैतज्जातु समाचरेत् ।

तदूर्ध्वमेव चापाभमिति । तदूर्ध्वं नीव्रान्तकुक्षिनिम्नादुपरितनं निम्नमित्यर्थः । नीव्रान्तकुक्षिनिम्नस्य सज्यचापाकृतित्वकल्पनं नैव शास्त्रसम्मतं, न च शोभावहमित्यभिप्रायेणाह — नैतज्जात्वित्यादि । एतत् पूर्वोक्तं नीव्रान्तकुक्षिनिम्नम् । समाचरेत्, सज्यचापाभमिति शेषः [ ॥ ४३½ ॥

अथ नीव्रस्थाने लुपानां मिथोऽन्तरालमानं दर्शयति —

लुपालुपान्तरं नीव्रस्थाने स्यात् करमानतः ॥ ४४ ॥
प्रायशः कथितं सद्भिः किञ्चिदूनाधिकेन वा ।

लुपालुपान्तरमित्यादि । एकस्या लुपाया आरभ्य तत्समीपतरवर्तिलुपान्तरं यावदन्तरालमानमित्यर्थः । 'लुपाल्लुपान्तरमि'ति पाठे लिङ्गसाधुत्वं साध्यम् । करमानत इति । एकहस्तप्रमाणेनेत्यर्थः । प्रायश इत्यनेन स्फुटितमर्थमाह — किञ्चिदूनेत्यादि । किञ्चिदित्यनेन ऊनाधिकभावः यवैरङ्गुलैर्वा कल्प्यः, न तु हस्तेनेति सूचयति । शोभैव तु

तत्कल्पने नियामिकेत्यभिप्रायः । इह 'लुपामूले चे'त्यारभ्य 'किञ्चिदूनाधिकेन वे'त्यन्तैः श्लोकैः ये विषयाः प्रतिपादिताः, तान् सर्वान् सङ्गृह्याह श्रीकुमारः —

"छिन्द्यान्मूलं लुपानां वै तद्धितानाख्यसूत्रतः ।
तस्माद् वलयलम्बान्तं वलयाद् वलयान्तरम् ॥
वलयोत्तरयोर्मध्यं वलयाद् वंशकावधि ।
छिन्द्यात् परशुना सम्यग् यथानिम्नं तु तक्षयेत् ॥
कुक्षिनिम्नं च सर्वासां सज्यचापमिवाचरेत् ।
अर्धचन्द्राभमित्येके नीव्रान्ते तु विशेषतः ॥
कुक्षिनिम्नं प्रकर्तव्यं जङ्घापृष्ठसमं नृणाम् ।
वलयस्थानपर्वाणि लुपाविस्तारमानतः ॥
उत्त(र ? रे) द्विगुणं वा स्यादुत्तरोपान्तपर्वकम् ।
ऊर्ध्वबिन्दुगतालम्बसूत्रात् कूटार्धमानकम् ॥
नीत्वा तत्र शिखां कृत्वा छिन्द्यात् परशुना ततः ।
व्यासं सङ्कोचयेत् तत्र सज्यचापाभमेव तु ॥
उत्तानधनुषा तुल्यं पुच्छभागोर्ध्वमाचरेत् ।
लुपालुपान्तरं नीव्रस्थाने स्यात् करमात्रकम् ॥
प्रायेण कथितं सद्भिः किञ्चिन्न्यूनाधिकं तु वा ।"

इति । अत्र कूटमित्येतद् वंशस्याप्युपलक्षणम् । 'उत्तरे द्विगुणं वे'ति पक्षान्तरप्रदर्शनम् । अन्यस्तु पक्षः 'उत्तरे त्रिगुणा स्मृते'ति [illegible] ग्रन्थे प्रदर्शितः । वलयपत्रप्रमाणं तु —

"वलयत्रिगुणविस्तारं कुर्याद् वलयपत्रकम् ।
नानापत्रविचित्राद्यैर्भूषयेत् तद् यथारुचि ॥"

इत्यन्यत्रोक्तम् । वंशोच्छ्रयादिकं तु द्वादशाध्याये वक्ष्यति ॥ ४४, ४४½ ॥

अथ लुपासङ्ख्याया नियममाह —

**युग्माश्चैव लुपाः कार्या मध्ये नायामतारयोः ॥ ४५ ॥**

युग्माश्चैवेत्यादि । तासां पङ्क्तयस्त्वयुग्मा एव कार्या इत्यर्थतः

सिध्यति । गृहदैर्घ्यविस्तारयोर्मध्येऽपि ता लुपा न कार्या इत्याह — मध्ये नायामतारयोरिति ॥ ४५ ॥

अथ वलयान्तरालनिम्नभागस्थखण्डीदैर्घ्यमाह —

लुपानामपि सर्वासां खण्डीबाहल्यमुच्यते ।
सप्ताङ्गुलान्तं सर्वत्र स्वस्वव्यासार्धमानतः ॥ ४६ ॥
अष्टाङ्गुलं ज्यङ्गुलं स्याद् यवपञ्चकसंयुतम् ।
एवमङ्गुलवृद्ध्या तु यववृद्ध्या तदूर्ध्वतः ॥ ४७ ॥

लुपानामित्यादि । इह बाहल्यं चार्थाद् दैर्घ्यमेव भवतीति साम्प्रदायिकाः । तथाचायमत्र श्लोकार्थः — तत्तल्लुपाविस्तारार्धमानेन तत्तल्लुपाखण्डीदैर्घ्यं कार्यमित्येकः प्रकारः । तत्तल्लुपाविस्तारांशात् सप्ताङ्गुलपर्यन्तम् एकैकाङ्गुलवृद्ध्या तत् कुर्यादित्यपरः प्रकारः । यवपञ्चकयुक्तात् ज्यङ्गुलादारभ्याष्टाङ्गुलपर्यन्तमेकैकाङ्गुलवर्धनेन तत् कुर्यादिति तृतीयः प्रकारः । उक्तप्रकारत्रयादूर्ध्वमपि तद्दैर्घ्ये कर्तव्यतया प्रसक्ते, तत्र एकैकयवप्रमाणमुपर्युपरि वर्धयेदिति ॥ ४६, ४७ ॥

एवं लुपाकरणं सप्रपञ्चं निरूपितम् । अत्रापि तत्तद्रेखाप्रमाणेन लुपादैर्घ्यादिकल्पनं दुःशकं मन्यमानानां लुपाप्रमाणविज्ञानोपायान्तरमाह —

अथवा मन्दबुद्धीनां क्रियासौकर्यसिद्धये ।
पक्षान्तरेण संक्षिप्य वक्ष्येऽहं लक्षणं पुनः ॥ ४८ ॥
यथा च फलकामध्ये तद्वद् भूमौ समालिखेत् ।
वेश्मप्रमाणसदृशं तन्महत्त्वमुदीरितम् ॥ ४९ ॥
स्वस्वसूत्रे च फलकां सन्निधाप्य च पार्श्वयोः ।
वलयादिगतं सूत्रं वितानं तद्वदालिखेत् ॥ ५० ॥
वितानतिर्यङ्मध्येन लम्बसूत्राणि पातयेत् ।

अथवेत्यादि । एषामयमभिप्रायः — हस्तिपादयन्त्रेणात्र्युद्धृत्य भवनतयन्त्रेण समतलतामापाद्य उक्तगृहविस्तारदैर्घ्यप्रमाणेन व्यवस्था-

पितं किञ्चिद् भूपृष्ठं ग्रहत्वेन सङ्कल्प्य तत्र वंशलुपादीनां स्थानानि रेखाकारेण परिकल्प्य तदुपरि तत्तत्फलकं निवेशयेत् । अथ फलकोपरि भूपृष्ठनिवेशितवितानतिर्यग्लम्बसूत्रप्रतिसङ्क्रमणपूर्वकं यत्र यत्र वलयादिकं भवेत्, तत्र तत्र तत्तद् उक्तप्रकारेण तत्फलके उल्लिख्य गृहोपरि यथायथं निदध्यादिति ॥ ४८ —५०½ ॥

इह पुनश्चतुर्विंशतियवप्रमाणकमेकं मानसाधनं चतुर्विंशत्यङ्गुलात्मकेन किष्कुणा सममिति परिकल्प्य रेखां मापयित्वा तदुद्दिष्टेषु लुपादिषु प्रमाणमियदित्यवधारयेदित्यभिप्रायेणाह —

चतुर्विंशद्यवः किष्कुः पूर्वं तत्र करः स्वयम् ॥ ५१ ॥

प्रमाणसाधनं यस्मात् तस्माद् भेदोऽत्र जायते ।
तच्छेषं पूर्ववत् सर्वं कर्तव्यं शिल्पकर्मणि ॥ ५२ ॥

चतुर्विंशद्यव इत्यादि । भेद इति । प्रमाणस्येति शेषः । अत्र भूपृष्ठे रेखाकरणेन लुपादीनां प्रमाणनिर्णयप्रसङ्गे । तच्छेषमित्यादि स्पष्टार्थम् ।

लुपानां संज्ञाविशेषाः, फलके तदुल्लेखनप्रकाराश्च ग्रन्थान्तरे त्वेवं प्रदर्शिताः —

"लुमाः फलकवर्तीभिः कृताः समभिदध्महे ।
उत्क्षिप्तानां च ये भेदा जायन्ते सर्ववास्तुषु ॥
तुम्बिनी लम्बिनी हेला शान्ता कोला मनोरमा ।
आध्माता चेति सप्तैता नामभिः कथिता लुमाः ॥
चतुरश्रीकृते क्षेत्रे कान्ते भूमितले शुभे ।
सूत्रं क्षेत्रसमं कृत्वा कर्णात् कर्णं विभाजयेत् ॥
विन्यसेद् गर्भसूत्राणि तयोर्मध्यगतानि च ।
भूयश्चान्यानि मध्येषु सूत्राणि विनिवेशयेत् ॥
मध्ये वृत्तं समालिख्य तुम्बिका कमठोपमा ।
कार्या मार्गीकृतं तत्र वृत्तं क्षेत्रे प्रवर्तयेत् ॥

सूत्रे सूत्रे तु पिण्डस्थां लुमां सूत्रेण वालिखेत् ।
लुमान्तरेषु सर्वत्र वैकर्थ्येन धुपीकृतम् ॥
तयोरन्तरयोर्मध्ये लुमामूले विकर्करम् ।
द्विगुणं त्रिगुणं वा स्यात् ततश्च वलिनीं लिखेत् ॥
व्यासार्धेनोदयश्चेह कर्तव्यस्तत्र मण्डले ।
सम्पातात् तलसूत्राणां तुम्बिका चोर्ध्वसूत्रिना ॥
उदयस्तलसूत्रस्य तुम्बिकायास्तथान्तरम् ।
पूर्वसूत्रे लुमाग्रेषु कण्टकान् कल्पयेद् ऋजून् ॥
पहिःस्थानेषु चान्तेषु लक्षं कुर्यात् सुनिश्चितम् ।
लक्षं गृहीत्वाधस्सूत्र ऊर्ध्वसूत्राणि लक्षयेत् ॥
उदये कण्टकस्यान्ते तद्वदेवानुसन्ततम् ।
दापयेदुत्तरं सूत्रं लुमानां खल्वकानि च ॥
पिण्डव्यासं वलीनां चाप्येषु क्षोभणविस्तृती ।
लुमा कर्णगता या स्यादाध्माता सा प्रकीर्तिता ॥
छेदे प्रवर्तितान्या स्यात् किञ्चिदूना मनोरमा ।
कोला तृतीया शान्तेति चतुर्थी परिकीर्तिता ॥
हेलाख्या पञ्चमी षष्ठी लम्बिनी नामतो लुमा ।
सप्तमी तुम्बिनीत्येता मार्गसूत्रविनिर्गताः ॥"

इति ॥ ५१,५२ ॥

इति वास्तुविद्यालघुविवृतौ लुमाकरणं नाम
एकादशोऽध्यायः

---

## अथ धूलीनिरोधनं नाम द्वादशोऽध्यायः ।

अथ लुपोपनिबद्धायाः नीव्रपट्ट्याः प्रमाणमाह—

उत्तरस्य तु विष्कम्भे दशभागकृते पुनः ।
अष्टांशान्नीव्रपट्टिः स्यात् सप्तार्धा वाथ सप्त वा ॥ १ ॥

उत्तरस्येत्यादि । विष्कम्भो विस्तारः । नीव्रपट्टिः स्यादिति । नीव्रपट्ट्या विस्तारः स्यादित्यर्थः । अत्राष्टांशादयो यथाक्रमम् उत्तममध्यमाधमानि मानानि वेदितव्यानि ॥ १ ॥

तस्या घनमाह—

बहलं तत्त्रिभागैकं व्यासेनाष्टांशके कृते ।
ऊर्ध्वपट्टं त्रिभागं वा मध्यं तच्चतुरंशकम् ॥ २ ॥

क्षुद्रवाजनमेकांशमथ पञ्चांशके कृते ।
व्यासे वाजनमत्र्यंशं त्रिभागं घनमुच्यते ॥ ३ ॥

बहलमित्यादि । तत्त्रिभागैकमिति । नीव्रपट्टिविस्तारे त्रिधा विभक्ते एकांशेन तद्घनमित्यर्थः । ऊर्ध्वपट्टादिमानमाह — व्यासेनेत्यादि । नीव्रपट्टिविस्तारेऽष्टधा विभक्ते भागत्रयेणोर्ध्वपट्टं, मध्यं चतुरंशेन, तदधः अल्पवाजनमेकांशेन च कारयेदित्यर्थः । प्रकारान्तरमाह — अथ पञ्चांशक इत्यादि । व्यासः नीव्रपट्टिविस्तारः । वाजनयोजनाभावपक्षे तु त्र्यंशेन ऊर्ध्वपट्टं, त्र्यंशेन घनं च कुर्यादित्यन्यत्र दृष्टम् । उत्तरविस्तारादष्टांशेन सप्तांशेन वा हीनं नीव्रपट्टिविस्तारं कल्पयेदित्यन्ये वदन्ति ॥ २,३ ॥

नीव्रकर्णमानमाह—

विस्तारस्य त्रिभागैकं कर्णं नीव्रवितानतः ।
पञ्चभागद्विभागं वा सप्तभागत्रिभागिकम् ॥ ४ ॥

विस्तारस्येत्यादि । नीव्रवितानसूत्राद् गतं नीव्रकर्णं स्वविस्तारस्य त्रिभागेन कुर्यात् । तत्र प्रकारान्तरप्रदर्शनं — पञ्चभागेत्यादि । पञ्चधा विभक्ते विस्तारे द्विभागेन, सप्तधा वा विभक्ते तस्मिन् त्रिभागेन च कर्णं कुर्यादित्यर्थः ॥ ४ ॥

अथ धूलीनिरोधनाख्यं पटलप्रान्तपट्टिकायोजनं कर्म प्रस्तौति —

नमस्तुभ्यं भगवते पत्रनायामितौजसे ।
चराचरचरायैतन् मदनं रक्ष वार्मुचः ॥ ५ ॥

स्नातो नवाम्बरालेपः सम्प्रार्थ्यैवं सदागतिम् ।
सन्दध्यादायसैः कीलैर्लुपां प्रति विशुद्धधीः ॥ ६ ॥

नमस्तुभ्यमित्यादि । सदागतिः वायुः । लुपां प्रतीति । लुपायामित्यर्थः । सन्दध्यादिति । नीव्रपट्टमिति शेषः ॥ ५,६ ॥

सङ्गृहैवमुक्तमेवार्थं विधिं वितत्य दर्शयति—

अथ वक्ष्यामि संक्षेपाद् धूलिकारोधमुत्तमम् ।
वायव्ये मण्डपं कुर्यात् प्रासादस्यानुरूपतः ॥ ७ ॥

तत्र कुण्डं प्रमाणेन कृत्वा चाग्निं प्रणीय च ।
संस्कृत्य च यथान्यायं पश्चाद्धोमं समाचरेत् ॥ ८ ॥

अथेत्यादि । धूलिकारोध इति तत्क्रियायाः संज्ञा । वायव्ये वायुकोणे । प्रासादस्य गृहस्य । प्रमाणेन कुण्डनिर्माणोक्तविधानेन । यथान्यायमिति । स्वगृह्योक्तप्रकारेणेत्यर्थः ॥ ७,८ ॥

होमप्रकारमाह—

पर्वतास्त्रेण मनुना सर्पिषैव त्र्यहर्निशम् ।
पश्चाच्चतुर्थे दिवसे समिदाज्यादिकं क्रमात् ॥ ९ ॥

अष्टोत्तरसहस्रं च प्रत्येकं जुहुयात् ततः ।
पायसैर्भक्ष्यभोज्याद्यैर्भोजयित्वा द्विजोत्तमान् ॥ १० ॥

चतुर्विंशतिसङ्ख्याकान् भूषणाद्यैश्च तोषयेत् ।
तेभ्योऽथ दक्षिणां दत्त्वा तथा होमं समाप्य च ॥ ११ ॥

तैरेव विप्रमुख्यैश्च सह ता नीव्रपट्टिकाः ।
प्रक्षाल्य शुद्धतोयेन नालिकेरोदकेन च ॥ १२ ॥

क्षीरेण च तथा कृत्वा चतुर्दिक्षु सुसंस्थिताः ।
आसिच्य पञ्चगव्येन सम्पाताज्येन सेचयेत् ॥ १३ ॥

धर्मेतेत्यादि । मनुः मन्त्रः । समिदाज्यादिकमिति । समिदादिकं चतुर्द्रव्यमित्यर्थः । एवञ्च दिनत्रये सर्पिषैव केवलं होमः, चतुर्थे दिवसे तु समिदाज्यादिकानां चतुर्णां द्रव्याणां यथाक्रमं होमः । विशेषाकथनात् सर्वत्र मनुः पर्वतास्त्रमेवेति लभ्यते । समिदादिष्वेकैकमपि अष्टोत्तरसहस्रसङ्ख्यया होतव्यमित्याह—प्रत्येकमिति । भोजयित्वेति । ब्राह्मणभोजनमपि चतुर्थदिवस एव कार्यम् । दक्षिणां दत्त्वेति । धनदौर्लभ्याद् भूपादिदानाशक्तावपि यथाशक्ति दक्षिणावश्यं दातव्येत्यभिप्रायः । चतुर्दिक्षु सुसंस्थिता इति । नीव्रपट्टिका इति विशेष्यम् । ताश्च गृहस्य चतसृषु दिक्षु योजनीयत्वात् चतुस्सङ्ख्याका इत्यर्थतः सिध्यति । सुसंस्थिताः क्रियावसाने यथा नीव्रेषु योजयितुं क्षमाः, तथा ताः निर्वृत्तसर्वशिलाः सत्यस्तत्र तत्र यथास्थानं निवेशिताः । सम्पाताज्येनेति । पूर्वोक्ते होमे सम्भृतेनेति शेषः । शेषं सुबोधम् ॥ ९—१३ ॥

कृत्यशेषमाह—

ततो लुपाङ्कितं यत्र तत्र तत्राभिमन्त्रयेत् ।
एवं कृत्वाथ नीव्रान्ताल्लुँपानां देशिकोत्तमः ॥ १४ ॥

तत इत्यादि । 'लुपाङ्कितमि'ति, 'लुपानां नीव्रान्तान्' इत्यनयोः पदयोरयमर्थः— नीव्रपट्टेषु यत्र यत्र लुपायोगः तत्तत्स्थानं, लुपासु च यत्र यत्र नीव्रपट्टयोगः तत्तत्स्थानं च प्रत्येकं प्रत्येकं स्पृष्ट्वा जपेदिति ॥ १४ ॥

एवं प्राच्यादिक्रमेण गृहाभिमुखं च स्थित्वा जपेदित्याह—

प्रासादाभिमुखं स्थित्वा विप्रमुख्यैश्च तैः सह ।
नमस्तुभ्यं भगवते सर्वप्राणाय वायवे ॥ १५ ॥

धूलिकारोधमस्माभिः कृतं तदनुमोदताम् ।
सम्प्रार्थ्यैवं चतुर्दिक्षु प्रदक्षिणवशात् ततः ॥ १६ ॥

देशिकेनाप्यनुज्ञातस्तैरपि द्विजसत्तमैः ।
स्थपतिः शिल्पिभिः साकं प्रणिपातपुरस्सरम् ॥ १७ ॥

कृताञ्जलिरिति प्रार्थ्य दिक्पालेशं तदाचरेत् ।

नमोऽस्तु भूदेवपदाम्बुजेभ्यो
नमोऽस्तु देवाय सदाचराय ।
एवं कृतायां खलु नीव्रपट्ट्यां
धूलीनिरोधाय दयां ददातु ॥ १८ ॥

स्थपतिस्तां समुद्धृत्य शिल्पिभिश्च यथाक्रमम् ।
नीव्रान्तेषु समारोप्य वाद्यघोषेण भूयसा ॥ १९ ॥

प्रणम्य पूर्वं पवनं सदागतिं
गुरुं गणेशं त्वथ देवता दिशाम् ।
विधाय पूजां विधिवत् समाप्य तं
सम्प्रार्थ्य विद्धं तनुयात् सुकीलकैः ॥ २० ॥

नमस्तुभ्यं भगवते मारुताय महात्मने ।
धूलीनिरोधनं कर्तुं प्रसादं कुरु मे प्रभो! ॥ २१ ॥

**प्रासादेत्यादि** । उभयत्रापि जपितव्यं मन्त्रं प्रदर्शयति — **नमस्तुभ्यमित्यादि** । एवमाचार्यो ब्राह्मणैः सह चतुर्दिक्षु प्रदक्षिणक्रमेण सम्प्रार्थ्य स्थपतिमाहूय 'त्वं नीव्रपट्टं सन्धेहि' इत्यादिशेत् । स चान्यैः शिल्पिभिः साकं कृताञ्जलिपुटो देशिकं ब्राह्मणांश्च प्रणम्य दिक्पालान् सम्प्रार्थ्य 'नमोऽस्तु भूदेवे'त्यादिकं मन्त्रमुच्चार्य नानाविधवाद्यघोषपुरस्सरं नीव्रपट्टिं यथाविध्युद्धृत्य नीव्रान्तेषु समारोपयेत् । ततो यथाचारं गुरुगणेशादिपूजां निर्वर्त्य 'नमस्तुभ्यं भगवते मारुताये'त्यादिमन्त्रेण सम्प्रार्थ्य सुदृढैः कीलैः तत्पट्टिकां विद्धां कुर्यादित्याह— **'सम्प्रार्थ्यैन्न**मित्यादिभिः प्रसादं कुरु मे प्रभो' इत्यन्तैः श्लोकैः ॥ १५ —२१ ॥

अथ पट्टिकाप्रमाणमाह —

यवात्यष्टिमितव्यासा पट्टिका कथिता बुधैः ।
यवानां नवकं प्रोक्तं बहलं शिल्पकोविदैः ॥ २२ ॥

यथात्यष्टिमितेत्यादि । अत्यष्टि सप्तदश । पट्टिकाया विस्तारः सप्तदशयवमितः । घनं यवनवकमितं च स्यादित्यर्थः । तथा च विस्तारार्धेन घनं कल्प्यमित्युक्तं भवति ॥ २२ ॥

पट्टिकानामन्तरमानमाह—

बहलात् पादहीनं तु तासामन्तरमीरितम् ॥ २३ ॥

बहलादित्यादि । यवनवकात् पादहीनं सपादयवद्वयन्यूनम् । क्वचिन्मातृकायां 'यथात्यष्टी'त्यादिकं पद्यं न पठ्यते ॥ २३ ॥

अथ वंशमानमाह—

उत्तरेण प्रवक्ष्यामि वंशमानं यथाविधि ।

अर्धं वा पादहीनं वा वंशस्योच्छ्रयमिष्यते ॥ २४ ॥

उच्छ्रयेण तथा तारमिति शास्त्रविदो विदुः ।

उत्तरेणेत्यादि । अर्धं वेत्यादि । उत्तरघनादर्धांशेन, तस्मात् पादोनांशेन वा वंशोच्छ्रयः कार्य इत्यर्थः । उच्छ्रय उन्नतिः । क्वचिदुत्तरघनेन तुल्यापि वंशोन्नतिः क्रियते । वंशविस्तारमाह — उच्छ्रयेणेत्यादि । अर्धं वा पादहीनं वेति अत्रापि योज्यम् । श्रीकुमारस्तु —

"उच्छ्रयेण तथा तारमुच्छ्रयेण समं तु वा"

इत्याह । तारो विस्तारः ॥ २४½ ॥

अथ कूटमानमाह—

विकृतिलुपानां तासां सर्वासां सकलबहलसदृशतरा ॥ २५ ॥

परिधिः कूटस्येष्टा सा कथिता शिल्पशास्त्रज्ञैः ।

विकृतीत्यादि । समचतुरश्रे गृहे कूटेन योज्यमानाः सर्वा एव लुपा विकृता एव भवेयुरित्यभिप्रायेणाह — विकृतिलुपानामिति । तथा चायमर्थः — कूटे योज्यमानानां सर्वेषां लुपाग्राणां घनेषु मण्डलितेषु यल्लभ्यते, तन्मानेन कूटपरिणाहं कुर्यादिति । शिल्परत्ने पुनः —

"उत्तरतारसमानं कुर्याद् वा तत्र कूटविष्कम्भम् ।
सार्धं वा सपादं द्विगुणं वा कारयेद् यथाशोभम् ॥"

इति पक्षान्तरमपि दृश्यते ॥ २५½ ॥

कूटमूले विक्रतिलुपासङ्ख्यामनुसृत्य कारेचात् पट्टानपि योजयेदित्याह—

**यावत्यो विक्रतिलुपास्तावन्त्यश्चाणि कूटस्य ॥ २६ ॥**

**वृत्तं वापि समस्तं तक्षणकुशलैस्तु कारयेन्मतिमान् ।**

**यावत्य** इत्यादि । **वृत्तं** चेत्यादि प्रकारान्तरप्रकटनम् । **तक्षणकुशलैरि**त्यनेन बलाधानायान्यदपि वा युक्त्या कल्प्यमिति सूचयति ॥ २६½ ॥

कूटदैर्घ्यमाह—

**व्यासार्धाधिकदीर्घं पादोनाक्षं तथैव नेत्रं वा ॥ २७ ॥**

**धुर्धूरप्रसवाभं कूटं कुर्यादधोमूलम् ।**

**व्यासार्धे**त्यादि । व्यासश्चार्थात् कूटस्यैव । **पादोनाक्षमिति** । पादोनद्विगुणमित्यर्थः । **नेत्रमिति** । द्विगुणमित्यर्थः । एवञ्च स्वविस्तारादर्धाधिकं पादोनद्विगुणं द्विगुणं चेति त्रिप्रकारं कूटदैर्घ्यं विहितं वेदितव्यम् । कूटसन्निवेशमाह— **धुर्धूरप्रसवाभमिति** । प्रसवं पुष्पम् । निवेशने नियमः—**अधोमूलमिति** । अधिकं तु—

"कूटः कोटिलुपाग्रकल्पितशिखासम्प्राप्तपार्श्वावटः
पार्श्वाक्रान्तलुपाग्ररन्ध्रनिहितायःकीलसङ्कीलितः ।
आधारोऽस्य लुपाग्रकल्पितशिखा तस्मादधोमूल ए-
वोक्तोऽसौ विकृता लुपाश्च सकला गेहे समाढ्यश्रके ॥"

धुर्धूरप्रसवोपमोऽष्टनृपकोणो वा तथा वर्तुलः
संफुल्लाब्जयुगोऽथवाथ गुलिकारूपः स्वमध्यादधः ।
विस्तारद्विगुणायतस्तदुरगांशोनदीर्घोऽथवा
कूटोऽब्ध्यादियवोत्थपत्रविलसन्मध्यप्रदेशो भवेत् ॥

प्रायः सर्वलुपाघनोन्मितपरीणाहं करोतूत्तर-
व्यासप्रायततं तथाङ्गुलकृतैर्योन्यादिभिः संयुतम् ।
पट्टं कोटिलुपावितानसदृशायामं लुपासङ्गम-
स्थानं पत्रपदोर्ध्वमित्यमुदितं कूटस्वरूपादिकम् ॥

इति चन्द्रिकावचनादवगन्तव्यम् ॥ २७½ ॥

अथ तत्रस्थपट्टमानमाह —

पट्टं किञ्चित् कुर्यात् कूटस्य लुपावितानतारसमम् ॥ २८ ॥

उत्तरवच्चैवोर्ध्वं पट्टमधश्चोर्ध्वतो हि घनम् ।

पट्टमित्यादि । कूटस्येति न केवलं कूटस्य, वंशस्यापीति श्रीकुमारः । लुपावितानतारसममिति । कोटिलुपाग्रविस्तारतुल्यायाममित्यर्थः । पट्टयोजनस्थानं नियमयति— उत्तरवदित्यादि । चूलिकोत्तरे पट्टः उपरि निवेश्यते, कूटपट्टस्तु तस्याध एव संयुज्यत इति भावः । 'ऊर्ध्वतो निघनमि'ति शिल्परत्नपाठः ॥ २८ ॥

अपिधानमानादिकमाह —

तलोच्छ्रयार्धमुदितमपिधानस्य विस्तृतम् ॥ २९ ॥

पादं वाप्यथ पादोनं कीर्तितं तदवाङ्मुखम् ।

बहलं जन्मतुल्यं स्यात् पादोनं वार्धमेव वा ॥ ३० ॥

वेश्मपुंसः शिरोदेशमपिधानमितीरितम् ॥ ३०½ ॥

तलोच्छ्रयेत्यादि । तलमधिष्ठानम् । अपिधानं वेश्मशिरोदेश इति समनन्तरमेव वक्ष्यति । पादोनमिति । अधिष्ठानोच्छ्रये चतुर्धा विभक्ते त्रिभिरंशैर्युक्तमित्यर्थः । अपिधाननिवेशनविधिः— तदवाङ्मुखमिति । तस्य घनमाह — बहलमित्यादि । जन्म पादुकम् । जन्मतुल्यं पादुकाघनतुल्यम् । वार्धमेव वेति । 'सार्धमेव वे'ति पाठः "पादुकोच्चेन बहलं समम् अर्धं त्रिपादकम्" इति शिल्परत्नपाठेन विरुध्यते । शेषं सुगमम् ॥ २९, ३०½ ॥

इति वास्तुवि[illegible] धूलीनिरोधनं नाम
द्वादशोऽध्यायः ।

## अथ द्वारविन्यासो नाम त्रयोदशोऽध्यायः ।

अथ नवमाध्यायशेषतया अवनतयन्त्रेण भूमेः समीकरणं द्वारविन्यासादिकं च प्रदर्शयितुमध्यायान्तरमारभ्यते । तत्र प्रथमम् अवनतयन्त्रस्य लक्षणं तेन समतलत्वावगमनप्रकारं च प्रदर्शयति —

अथ कुर्यादवनतं पट्टिकाभिस्त्रिभिः (?) पुनः ।
साङ्गुलीकरमानाभिस्त्रिभिस्त्र्यश्रं दृढं तथा ॥ १ ॥
वापीं कृत्वा जलैः पूर्णां तस्यां शङ्कुद्वयं न्यसेत् ।
तोयोर्ध्वतुल्योन्नतयोस्तयोर्मूर्ध्नोः पदद्वयम् ॥ २ ॥
निधाय त्र्यश्रकस्यैतदूर्ध्वाश्राबद्धलम्बकम् ।
यत्राधःपट्टिकायां तत् स्पृशत्यङ्कमथालिखेत् ॥ ३ ॥
एवं कृत्वा ह्यवनतं तेन निम्नादि नीयताम् ।
अङ्कात् सूत्रगतिर्यत्र तन्निम्नं चान्यदुन्नतम् ॥ ४ ॥
पट्टिकाङ्केन लम्बस्य संयोगे समभूतलम् ।

अथेत्यादि । साङ्गुलीकरमानाभिरिति । पञ्चविंशत्यङ्गुलमिताभिरित्यर्थः । 'साङ्गुलीकरमानाभिरि'ति केषाञ्चित् पाठः । तत्पक्षे षड्विंशत्यङ्गुलपरिमिताभिरित्यर्थः । प्रमाणप्रदर्शनाय त्रिभिरित्यस्य पुनरुपादानम् ।

"पट्टिकाभिस्त्रिभिः पुनः ।
साङ्गुलीकरमानाभिस्त्र्यश्रं सम्बध्य निश्चलम् ।"

इति शिल्परत्नपाठः । त्र्यश्रमिति । त्रिकोणाकारमित्यर्थः । वापीमित्यादि । जलस्य समीकरणस्वभावत्वात् तत्र निम्नोन्नतत्वपरिहारायैषा क्रिया । तोयोर्ध्वतुल्योन्नतयोरिति । जलोपरि समप्रमाणेन स्थितयोरित्यर्थः । तयोः द्वयोः कीलयोः । पदद्वयमिति । त्र्यश्राकारस्यास्य यन्त्रस्य पार्श्वयोर्ये पट्टिके प्रसृते, ते इत्यर्थः । एवमवनतयन्त्रं शङ्कुमूर्ध्नोः संस्थाप्य ऊर्ध्वाश्रादेकं सूत्रमग्रे लोष्टादिनिबद्धमधः प्रसारयेत् । तच्च सूत्रं तिर्यक्पट्टिकायां यत्र स्पृशति, तत्र बिन्दुनाङ्कयेत् । अथ उद्धृत्य तस्मिन् भूपृष्ठे निवेशिते तिर्यक्पट्टिकाकृताद‌ङ्कात् सूत्रस्य गतिर्यत्र, तन्निम्नं ज्ञेयम् ।

पार्श्वान्तरमर्यादुन्नतं भवति। अङ्कस्य सूत्रस्य च सुसूक्ष्मो योगो यदा भवति, तदा तद् भूतलं निम्नोन्नतत्वरहितमित्यवगन्तव्यमित्याह — ऊर्ध्वाश्रायद्बलम्बकमित्यादि। शेषं सुगमम्॥ १-४½॥

एवं प्रथमं भूपृष्ठं समीकृत्य अनन्तरं गृहाधिष्ठानाधारतया उपपीठमिति कश्चिदवयवं योजयेदित्याह —

अधिष्ठानस्य चाधस्तादुपपीठं प्रयोजयेत्॥ ५॥

अधिष्ठानस्येत्यादि। अधिष्ठानस्य स्वरूपलक्षणादिकं नवमाध्याये प्रपञ्चितम्॥ ५॥

अस्योपपीठस्य फलमाह—

रक्षार्थमुन्नतार्थं च शोभार्थं च प्रचक्षते।

रक्षार्थमित्यादि। अधिष्ठानस्येत्यार्थम्॥ ५½॥

तस्य प्रमाणमाह—

समं त्रिपादमर्धं वा पञ्चांशद्व्यंशमेव वा॥ ६॥

सपादं वाथ सार्धं वा पादोनद्विगुणं तु वा।

द्विगुणं वात्र कर्तव्यमधिष्ठानस्य तुङ्गतः॥ ७॥

सममित्यादि। अधिष्ठानस्य तुङ्गत इत्येतत् सममित्यादिषु प्रत्येकं सम्बन्धनीयम्। तुङ्ग उन्नतिः। पञ्चांशद्व्यंशमिति। अधिष्ठानतुङ्गे पञ्चधा विभक्ते ततोऽशद्वयेनेत्यर्थः। एवं 'सम'मित्यादिभिः 'द्विगुणं वे'त्यन्तैः प्रकारैः उपपीठस्योन्नतिरष्टधा प्रदर्शितेति मन्तव्यम्॥ ६,७॥

पादुकाख्यप्रथमावयवाद् उपपीठस्य निष्क्रमप्रमाणमाह —

आधङ्गपादुकादस्य निष्क्रमं करमानतः।

पादोनं वाथ हस्तं वा सपादं सार्धमेव वा॥ ८॥

पादोनद्वितयं वा स्यात् किष्कुद्वितयमेव वा।

उपपीठं प्रकर्तव्यं मध्यकाद्युक्तमार्गतः॥ ९॥

आयङ्गेत्यादि । आयङ्गम् अधिष्ठानम् । इह निष्क्रमश्चार्याद् विस्तारो भवति । पादोनमित्यस्य हस्तमिति विशेष्यम् । 'सपादं सार्धमेव वे'त्यस्य स्थाने दृष्टः 'सपादं वा प्रकीर्तितमि'ति पाठः प्रक्रमाविरुद्धः । किष्कुशब्दो हस्तपर्यायः । एवमत्रोपपीठविस्तृतिः षट्प्रकारा ग्रन्थकृता प्रदर्शिता । वाशब्देन समुच्चयादिग्रन्थान्तरोक्तमपि प्रमाणं ग्राह्यमिति सूचयति । मञ्चकाद्युक्तमार्गेण इति । नवमाध्याये यानि मञ्चकाल-मञ्चकादीनि पञ्चाधिष्ठानान्युक्तानि, तेषु यस्य यस्य यद्यत् प्रमाणभूषणा-दिकं विहितं, तत्तदनुसृत्य तस्य तस्योपपीठं कल्पयेदित्यर्थः । अधिष्ठान-द्रव्येणैवोपपीठमपि निर्मातव्यमित्यादिका विशेषाश्चान्यतोऽवगन्तव्याः ॥ [ ८,९॥

अथ जलमणालीस्थानमाह—

उपपीठबहिर्भागमवटाङ्गणमीरितम् ।
तदैशान्यां प्रकर्तव्यो वारिमार्ग उदङ्मुखः ॥ १० ॥

उपपीठेत्यादि । अवटाङ्गणं गृहान्तर्भागस्थमङ्गणम् । तदैशा-न्यामिति । तस्य अवटाङ्गणस्य ईशकोण इत्यर्थः । 'अपदाङ्गणमि'त्यप-पाठः । उदङ्मुख इति । प्राङ्मुखोऽपि वा स भवेत् ॥ १० ॥

मल्लिकाकुट्टिमस्य स्थानं दर्शयति—

अङ्गणेन मुखायामहीनेनाष्टकृतेः पदम् ।
कृत्वा पदद्वयं त्यक्त्वा सौम्ये प्राच्यां पदं त्यजेत् ॥११॥
पदेऽन्यस्मिन् प्रकर्तव्यं मल्लिकाकुट्टिमं बुधैः ।

अङ्गणेनेत्यादि । मल्लिकाकुट्टिममिदं धर्मदेवतास्थानमिति साम्प्र-दायिकाः । अङ्गणेनेत्यादीनामयमर्थः — पूर्वोक्ते अवटाङ्गणे मुखायामात् कश्चिदंशं दक्षिणोत्तरभागयोः समं त्यक्त्वा अवशिष्टं भागं चतुष्षष्टिपदकं कुर्यात् । तत्र उत्तरस्यां दिशि पदद्वयं, प्राच्यामेकं च पदं त्यक्त्वा अन्य-स्मिन् पदे मल्लिकाकुट्टिमं यथोक्तं निर्मातव्यमिति । अष्टकृतिः अष्टानां वर्गः, चतुष्षष्टिरिति यावत् ॥ ११,११½ ॥

तस्य प्रमाणादिकमाह —

उपपीठादिसंयुक्तं तुर्यश्रं ध्वजयोनिकम् ॥ १२ ॥
विस्तारसम उत्सेधः पादोनं वा यथोचितम् ।
गृहाद्यङ्गानुरूपेण कर्तव्यं मञ्चकादिभिः ॥ १३ ॥

उपपीठादीत्यादि । आदिशब्देन अधिष्ठानावयवान्तराण्यपि ग्राह्याणि । तुर्यश्रमिति । औचित्यात् समचतुरश्राकारगृहानुरूप्यसम्पादनायोक्तम् । शोभानुरोधात्तु —

"केतुर्यं तुल्यताराततिजलनिधिकोणं च वस्वश्रकोणं
वृत्तं वा स्वोपपीठाद्यवयवसहितं कैरवाद्यन्वितं वा ।
गेहाधिष्ठानतुङ्गं क्वचिदपि तदूर्ध्वादिरुद्रान्तभागे-
र्हीनं वा रज्जुवेधाद्यपगतमुदितं मल्लिकाकुट्टिमं तत् ॥"

इति चन्द्रिकोक्तविधया अष्टाश्रादिकमपि तत् भवेत् । ध्वजयोनिकमिति । एकावयवेपात्मको ध्वजयोनिरिति पूर्वमुक्तम् । विस्तारसम इति । स्वस्य विस्तारेण सम इत्यर्थः । पादोनमिति । विस्तारादित्यर्थम् । गृहाद्यङ्गानुरूपेणेत्यादि । आद्यङ्गम् अधिष्ठानम् । गृहस्य मञ्चकादिषु पञ्चस्वधिष्ठानेषु यादृशमधिष्ठानं कल्पितं तादृशमेव मल्लिकाकुट्टिमस्याप्यधिष्ठानं कार्यमित्यर्थः । स्पष्टमन्यत् ॥ १२,१३ ॥

अथ पादुकाप्रक्षेपणात्मकं गृहारम्भविधिमाह —

अथातः सम्प्रवक्ष्यामि रचनां सर्ववेश्मनाम् ।
गृहाणां करणे शस्ते मुहूर्ते स्थपतिः स्वयम् ॥ १४ ॥

स्नातोऽथ वाससी श्लक्ष्णे नवीने परिधाय च ।
उत्तरीयादिभिः सर्वैरनुलेपैरलङ्कृतः ॥ १५ ॥

सम्पूज्याथ गणाधीशं विप्रेभ्यो दीयतां वसु ।
आद्यङ्गार्थं तु तद्द्रव्यमाशीर्वादैर्द्विजेरितैः ॥ १६ ॥

सहितः प्राङ्मुखः स्थित्वा विन्यसेत् तत्र पादुकम् ।
जन्माद्यमपिधानान्तं बुद्ध्या निश्चित्य मन्दिरम् ॥ १७ ॥

अथात इत्यादि । तद्द्रव्यमिति । पादुकमिति विशेष्यम् । येन द्रव्येण दार्विष्टकादिना अधिष्ठानं निर्मातुमिष्टं, तेन द्रव्येण कृतमित्यर्थः । जन्म पादुकम् ॥ १४-१७ ॥

पादुकस्य निष्क्रमप्रमाणमाह —

पत्रमानमिति प्रोक्तमुत्तराज्जन्मनिष्क्रमः ।
समं तत् परितः कुर्याद् दिग्विदिक्ष्वङ्गुलाष्टकम् ॥ १८ ॥

प्रायेण नृणां भवने पत्रमानमुदाहृतम् ।
अन्यत्र कूपादिभ्योऽथ बहिर्योनिः प्रकीर्तितः ॥ १९ ॥

पत्रमानमित्यादि । अयमभिप्रायः — उत्तरबाह्यपार्श्वादारभ्य एकं सूत्रं लम्बाकारेणाधः पातयेत् । भूपृष्ठे तद्योगस्थानाद् अष्टावङ्गुलानि परितः पादुकं निष्क्रमय्य बध्नीयात् । स एव पादुकानिष्क्रमः पत्रमानमित्युक्तमिति । तथाच चन्द्रिकायां —

"सर्वत्रोत्तरबाह्यसूत्रविहिताल्लम्बाद् बहिः कुट्टिम- :
स्याष्टाष्टाङ्गुलनिष्क्रमो य उदितस्तत् पत्रमानं विदुः ।"

इति । परं त्वत्र कुट्टिमस्य जगत्यपरपर्यायस्य तादृशो निष्क्रमः पत्रमानमित्युक्तम् । प्रकृतग्रन्थकृता तु जन्मनिष्क्रमः पत्रमानमित्युच्यत इति परं व्यतिरेकः । जन्म पादुकमित्युक्तं पुरस्तात् । एतच्च कुट्टिमस्याधो निवेश्यत इति नवमाध्यायविवृताधिष्ठानलक्षणात् प्रतीयते । यदि प्रमाणान्तराद् उभयोरपि तादृशो निष्क्रमः साध्यते, तर्हि नानयोर्वाक्ययोर्भेदः कल्पयितुं शक्यः । कुट्टिमस्याङ्गुलनिष्क्रमे पक्षान्तरमपि तेन प्रकटितं —

"यद्वा तद्द्विगुणं च तत्त्रिगुणितं वा तद् विधेयं तथै-
वावाच्युत्तरयोः षडङ्गुलमदो द्वन्द्वं प्रतीच्यां क्वचित् ॥"

इति । तद्‌द्विगुणम् अष्टाङ्गुलद्विगुणमित्यर्थः । एवं त्रिगुणादिष्वपि व्याख्येयम् । पादुकानिष्क्रमश्चायं स्वगृहयोनिरेव भवेदित्यभिप्रायं मनसि निधायान्यत्र कूपादिकल्पने योनिकल्पननियममाह — अन्यत्रेत्यादि । आदिशब्देन वापीभूगर्भगृहादयो ग्राह्याः । गृहे कूपवाप्यादिकरणे तु बहिर्योनिर्भवेत् । पादुकानिष्क्रमस्तु गृहयोनिः तदविरुद्धयोनिर्वा भवेदिति भावः । स्पष्टमन्यत् ॥ १८,१९ ॥

अथ पादुकाया आधारत्वेनापि उपानाख्यः कश्चिदवयवो योज्य इत्याह —

उपानं परितः कृत्वा विन्यसेत् तत्र पादुकम् ।

उपानमित्यादि । परितः दिक्षु विदिक्षु च । तत्र उपाने । अस्य मानं तु — "उपपीठोच्चसमोच्चां मासूरोपानहं करोतु दृढम्" इति चन्द्रिकावचनादितोऽवगन्तव्यम् । उपानोपानहौ समानार्थौ ॥ १९३ ॥

अथ पादुकानिक्षेपमसङ्गाद् वास्तुनो जीवभूतस्य गर्भस्य स्थानमात्रमिह प्रदर्शयति —

द्वारस्य दक्षिणे स्तम्भे गर्भन्यासो विधीयते ॥ २० ॥

पादुकोपरि विप्रस्य नृपाणां तदधः स्मृतम् ।
विशां तु तदधस्ताच्च तदधः शूद्रजन्मनाम् ॥ २१ ॥

द्वारस्येत्यादि । दक्षिणे स्तम्भ इति । दक्षिणस्तम्भमूल इत्यर्थः । अत्रापि वर्णक्रमेण विशेषमाह— पादुकोपरीत्यादि । तदधः पादुकाया अधोभागे । विशां तु तदधस्तादिति । पादुकाधारभूतोपानस्याप्यधस्तादित्यर्थः । एवमुपर्यपि । गर्भद्रव्यादिकं तु मयमतादितोऽवगन्तव्यम् । पञ्चाध्याये कश्चिद् गर्भन्यास उक्तः, स तु प्रमादजनितसन्धिवेधादिदोषप्रशमनार्थः । अयं तु गृहरक्षाभ्युदयार्थ इति तद्विदः ॥ [२०,२१ ॥

गर्भस्थापनानन्तरमेव तदुपरितनम् उपानादिकं न्यसेदित्यभिप्रायेणाह —

विन्यसेज्जन्मनो मूर्ध्नि जगत्याद्यपि देशिकः ।
एवं कृत्वा तदाद्यङ्गं तलिपं तत्र विन्यसेत् ॥ २२ ॥

**विन्यसे**दित्यादि । जन्म पादुकम् । जगती कुट्टिमाख्यमधिष्ठानावयवान्तरम् । आदिशब्देन यथायथं कुमुदगलतरपट्टिकादयो विवक्षिताः । गर्भन्यासप्रसङ्गाद् देशिक इत्युक्तम् । तस्यैव हि समन्त्रके तद्विन्यासेऽधिकारः । तलिपः स्तम्भः । तदाद्यङ्गं गृहस्याधिष्ठानमित्यर्थः ॥ २२ ॥

दारुस्वीकरणं पश्चान्निधिगेहस्य लक्षणे ।
वक्ष्ये नैवात्र वक्ष्यामि ग्रन्थबाहुल्यतो भयात् ॥ २३ ॥

**दारुस्वीकरण**मित्यादि स्पष्टार्थम् ॥ २३ ॥

अथ 'द्वारस्तम्भन्यासो जन्मनि तस्योदितश्च शिल्पिवरैः' इति पञ्चमाध्याये उक्तं, तत्र जन्मशब्देन पादुकोक्तेति तत्प्रसङ्गात् तदुपरि स्थापनीयस्य द्वारस्तम्भस्य लक्षणं प्रदर्शयिष्यन् प्रथमं तद्विन्यासमाह —

द्वारं च दिक्षु कर्तव्यं सर्वेषामपि वेश्मनाम् ।
मध्यस्थं द्वारमध्यं स्याद् वास्तुमन्दिरसूत्रयोः ॥ २४ ॥

**द्वार**मित्यादि । दिक्षु कर्तव्यमिति । तत्रापि दक्षिणशालायाम् उत्तराभिमुखं, पश्चिमशालाया पूर्वाभिमुखम् , उत्तरशालायां दक्षिणाभिमुखं, पूर्वशालायां पश्चिमाभिमुखं च मुख्यद्वारं कर्तव्यमित्यादिको विशेषोऽन्यत्र दृश्यते । द्वारस्थानविषयभूतं देवतापदादिकं तु पूर्वमत्रैव प्रपञ्चितम् । **मध्यस्थे**त्यादि । अयमर्थः — वास्तुसूत्रगृहसूत्रयोर्मध्ये द्वारमध्यं यथा स्यात् तथा तन्निवेशनीयमिति । इह वास्तुसूत्रम् अङ्गणसूत्रं भवतीति 'द्वाराण्यङ्गणगेहमध्यासिरयोर्मध्यस्थमध्यानी'ति चन्द्रिकावचनाद् विज्ञायते । अनेनैव च वचनेन ते द्वे अपि सूत्रे मध्यसूत्रे स्यातामित्यप्यवगम्यते ॥ २४॥

उपद्वाराणां विन्यसनक्रममाह —

उपद्वाराणि युज्यन्तां प्रादक्षिण्यात् स्वयोनितः ।

उपद्वाराणीत्यादि । स्वयोनित इति । अत्र गुरुदेवः —
"द्वारव्यासोच्चमखिलमङ्गुलीच्छेदवर्जितम् ।
अङ्गुलीकृत्य वसुभिर्वृद्धमर्कोसशेषितम् ॥
आयः स्याद् रामवृद्धानि मन्वाप्तानि व्ययः स्मृतः ।
त्रिवृद्धान्यष्टभिर्हृत्वा योनिर्माप्तमुडुभिर्भवेत् ॥
पर्यन्ते त्रिंशदाप्ते तु तिथिर्वारं च सप्तभिः ।
आयाधिकानुकूलर्क्षं द्वारं श्रेष्ठं तथा गृहम् ॥"
इति वदति । वृद्धं गुणितम् । आप्तं हृतावशिष्टम् ॥ २४½ ॥

अथ द्वारस्तम्भविस्तारमाह —

द्वारपादस्य विस्तारं तुल्यमुत्तरतारतः ॥ २५ ॥
स्वस्वयोन्या गृहादीनां कल्प्यन्तां द्वारयोनयः ।

द्वारपादस्येत्यादि । पादः स्तम्भः । तारो विस्तारः । उत्तरं चेह द्वारस्तम्भोपरि निधीयमानं ग्राह्यम् । द्वाराणां योनिनियममाह — स्वस्वयोन्येत्यादि । गृहादिकं यद्योनिकं विहितं, तद्योनिकमेव तदुपश्लिष्टं द्वारमपि स्यादित्यर्थः ॥ २५,२५½ ॥

द्वारप्रमाणमाह —

प्रस्तरोत्तरयोर्मध्यं पञ्चधा विभजेद् बुधः ॥ २६ ॥
द्वारायामं चतुर्भागं शेषांशे सूर्यभाजिते ।
शिरोमानं तु सप्तांशं पञ्चांशं गुल्फमिष्यते ॥ २७ ॥
उत्सेधशेषं परिधेर्द्वारतारमुदाहृतम् ।
प्रस्तरोत्तरयोर्मध्यमष्टभागविभाजितम् ॥ २८ ॥
सप्तांशमायतं कुर्यान्नवपञ्चांशविस्तरम् ।
उत्सेधशेषं नवभिर्हृत्वा पञ्चांशकं शिरः ॥ २९ ॥

गुल्फमानं चतुर्भागं कुर्याच्छास्त्रविशारदः ।
अथवा गुणतारं वा कुर्याद् द्वारं यथोचितम् ॥ ३० ॥

**प्रस्तरोत्तरयोरित्यादि** । प्रस्तरः द्वारस्याधस्तनं फलकमिति साम्प्रदायिकाः । **चतुर्भागमिति** । कुर्यादिति शेषः । शेषांशः अवशिष्ट एकोऽशः । सूर्याः द्वादश । तेषां द्वादशभागानां विनियोगमाह — **शिरोमानमित्यादि** । शिरः द्वारस्योपरितनं फलकम् । द्वारविस्तारमाह **उत्सेधेत्यादि** । परिधिः द्वारपर्यन्तमानम् । प्रकारान्तरेणापि द्वारमानमाह — **प्रस्तरेत्यादि** । **मध्यमष्टभागविभाजितमिति** । प्रस्तरोत्तरान्तरालमानमष्टधा विभक्तं यदि भवेत्, तदा वक्ष्यमाणक्रमेण तद्विनियोग इति तात्पर्यम् । **नवपञ्चांशविस्तरमिति** । आयामे नवधा विभक्ते पञ्चांशेन विस्तारं कुर्यादित्यर्थः । **उत्सेधशेषमिति** । अष्टधा विभक्ते प्रस्तरोत्तरमध्यमाने आयामाय विनियुक्ता अंशाः सप्त । अवशिष्ट एकोऽश एवेह उत्सेधशेषेणोच्यते । नवभिर्हत्वा नवभिर्भागैर्विभज्य । तृतीयमपि द्वारप्रमाणविधिमाह — **अथवेत्यादिना** श्लोकार्धेन । अयमभिप्रायः — प्रथमं द्वारस्य स्वदिग्योनिर्यथा स्यात् तथैकं परिधिं कल्पयेत् । ततस्तमर्धीकृत्य एकस्मिन्नर्धे वस्वादिदशनान्तासु पञ्चविंशतिसङ्ख्यासु एकादश, पञ्चदश, एकोनविंशतिः, त्रयोविंशतिः, सप्तविंशतिः, एकत्रिंशदित्येताः सङ्ख्या वर्जयित्वावशिष्टाभिः प्रत्येकं विभक्ते सति तत्तचतुरंशैर्विस्तारमवशिष्टांशैर्द्वारस्य दैर्घ्यं च कल्पयेत् । यथा—दशभागे परिध्यर्धे चतुर्भागो विस्तारः षड्भागो दैर्घ्यं भवति । एवं विभागान्तरेष्वपीति ॥ २९–३० ॥

अथ दिग्विदिग्भेदकारकेभ्योऽन्तरालेभ्यो बहिर्गतागतसौकर्याय निवेशनीयानां मार्गद्वाराणामाभिमुख्यनियममाह—

आग्नेय्यामजिरद्वारं दक्षिणाभिमुखं स्मृतम् ।
प्रत्यङ्मुखं तु नैर्ऋत्यां वायव्यां तदुदङ्मुखम् ॥ ३१ ॥
ईशे तत् प्राङ्मुखं कुर्यात् तानि स्युः पादुकोपरि

आग्नेय्यामित्यादि । तानि द्वाराणि, अर्थाद् द्वारस्तम्भाः । शेषं स्पष्टम् । अधिकं तु —

"कुर्यात् प्राङ्गणतो गमागमकृते द्वारं महत् पादुकं
तद्बाह्ये पथि पादुकोपरि गतं त्यक्त्वा मसूरोच्छ्रयम् ।
मार्गव्यासचतुर्गुणेन परिधिः स्वामीष्टयोनिर्यथा
तद्व्यासं तु तथा करोतु च विदिग्धामास्ति चेत् कुट्टिमम् ॥"

इति चन्द्रिकावचनादवगन्तव्यम् ॥ २१,२२½ ॥

इति वास्तुविद्यालघुविवृतौ द्वारविन्यासो नाम
त्रयोदशोऽध्यायः ।

---

## अथ कवाटद्वारविन्यासो नाम चतुर्दशोऽध्यायः ।

अथ पूर्वाध्यायान्ते योऽयं द्वारस्तम्भविन्यास उक्तः, तत्प्रसङ्गात् कवाटलक्षणं प्रस्तौति —

कवाटद्वितयं कुर्यान्मातृपुत्र्यभिधं बुधः ।

कवाटद्वितयमित्यादि । मातृपुत्र्यभिधमिति ।

"माता वामगता कवाटफलका सा सूत्रपट्ट्याश्रया
पुत्री दक्षिणगामिनीति सकलद्वारेषु सम्प्रेक्ष्यताम् ॥"

इति ग्रन्थान्तरे दर्शनाद् द्वयोः कवाटपुटयोः वामपार्श्वस्थितस्य मातेति, दक्षिणपार्श्वस्थितस्य पुत्रीति च संज्ञेति विज्ञायते । सन्निवेशभेदेन कवाटभेदान् प्रत्येवमाह गुरुदेवः —

"कवाटानि चतुर्धा स्युर्युग्मं चायुग्ममेव च ।
संहारो धावनं चैषां पृथग् लक्षणमुच्यते ॥
कवाटयुगलाभ्यां तु स्थिताभ्यां वामदक्षिणम् ।
सस्कन्धपट्टिकाभ्यां स्याद् युग्मं यत्राभिधीयते ॥

वामभागे स्थितं त्वेकमयुग्माख्यं कवाटकम् ।
गूढप्रवेशनिर्यूहं स्तम्भे वाप्युत्तरेऽपि वा ॥
संहाराख्यं कवाटं स्याद् भित्तिगूढं च धावनम् ।"

इति । एषां विनियोगमपि स एवमाह—

"देवद्विजनृपाणां तु युग्मायुग्मे च पूजिते ।
अयुग्मादीनि चान्येषां कवाटानि भवन्ति हि ॥"

इति । फलकायोजनं प्रति च—

"फलकाभिरयुग्माभिर्युग्माभिश्च सुरालये ।
कवाटं तु मनुष्याणां स्यादयुग्माभिरेव च ॥"

इत्याह ॥

अथ मातृकवाटफलकमोतसूत्रपट्ट्याः मानमाह—

द्वारतारे चतुष्पञ्चषट्सप्ताष्टविभाजिते ॥ १ ॥

एकांशः सूत्रपट्टिः स्यात् समं वा बहलं भवेत् ।
अर्धं वा पादहीनं वा बहलं परिकीर्तितम् ॥ २ ॥

**द्वारतार** इत्यादि । तारः विस्तारः । **सूत्रपट्टिः स्यादि**ति । सूत्रपट्ट्याः विस्तारः स्यादित्यर्थः । **सम**मिति । स्वविस्तारेणेति शेषः । बहलं घनम् । बहलकल्पने पक्षान्तरमाह— **अर्धं वे**त्यादि । अत्राप्यर्थात् स्वविस्तारादिति योज्यम् ॥ १,२ ॥

एवं सूत्रपट्टिकाया विस्तारबहले प्रदर्शिते । दैर्घ्यं तु द्वारदैर्घ्येण तुल्यं कार्यमित्याह—

द्वारायामसमायामा कार्या युग्माश्च पङ्क्तयः ।
अरव्यादिवेश्मकृत्यन्ताः पङ्क्तयः परिकीर्तिताः ॥ ३ ॥

**द्वारायामसमायामा कार्ये**ति । अथ तत्र योजनीयानां पद्मगुकुळानामन्तराळे निवेशनीयायाः पङ्क्त्याः सङ्ख्यानियममाह—

**युग्माश्च पङ्क्तय** इति । एतेन पद्ममुकुलान्ययुग्मानीत्यर्थसिद्धम् । युग्मानामपि पङ्क्तिसङ्ख्यानामियत्तामाह — **अश्व्यादीत्यादि** । अश्विनौ द्वौ । वेदसकृतिः षोडश । एवञ्च द्व्यादिषोडशसङ्ख्यान्ताः पङ्क्तयः यथायथं भवेयुरित्युक्तं भवति ॥ ३ ॥

अयुग्मसङ्ख्यानामपि पङ्कजमुकुलानामियत्तामाह —

अग्न्याद्यत्यष्टिसङ्ख्यान्तान्यम्बुजान्यग्रसन्धिषु ।
ताराधमुच्छ्रयं तेषां त्रिभागैकं तु वा भवेत् ॥ ४ ॥
बहलार्धं तु वा कुर्यादुच्छ्रये दर्शनांशिते ।
द्व्यंशं तदूर्ध्वपट्टं स्यादन्तरी त्रिभिरंशकैः ॥ ५ ॥

**अग्न्यादीत्यादि** । अग्नयः त्रयः । अत्यष्टिः सप्तदश । **अग्रसन्धिष्विति** । पङ्क्तीनामिति शेषः । पङ्कजमुकुलानां प्रमाणमाह — **तारार्धमित्यादि** । तारो विस्तारः, स चार्थात् सूत्रपट्टिकाया एव ग्राह्यः । उच्छ्रयः उन्नतिः । तेषाम् अम्बुजानाम् । **त्रिभागैकमिति** । सूत्रपट्टिकाविस्तारे त्रिधा विभक्त एकांशेनेत्यर्थः । **बहलार्धं तु वा कुर्यादिति** । पङ्कजोन्नतिविधेः पक्षान्तरप्रदर्शनपरमिदं वाक्यम्, 'समं वा बहलं भवेदि'त्यादिना यदुक्तं सूत्रपट्टिकाया बाहल्यं, तस्यार्धेन पङ्कजस्योन्नतिं कुर्यादित्यर्थः । पद्मकर्णिकादिमानमाह —**उच्छ्रय इत्यादि** । उच्छ्रयः पद्मस्येत्यार्थम् । दर्शनानि षट् । तदूर्ध्वपट्टं कर्णिकास्थानम् । अन्तरी पद्मस्थानम् । 'अन्तरी त्रिभिरंशकैः' इत्यस्य स्थाने 'पद्मं तु त्रिभिरंशकैः' इति शिल्परत्नपाठः ॥ ४,५ ॥

अथावशिष्टस्यैकांशस्य विनियोगं, दलादिनियमं च प्रदर्शयति —

दलाष्टकयुतं चापि वृत्तं केसरसंयुतम् ।
अधःपट्टं तदेकांशं तुर्यश्रं तत्समोच्छ्रयम् ॥ ६ ॥

**दलाष्टकयुतमित्यादि** । अयमभिप्रायः — पद्मस्याम्बुजाग्रोच्छ्रये षोढा विभक्ते पञ्चांशान् पूर्वश्लोकोक्तरीत्या विनियुज्य अवशिष्टे-

नैकेनांशेन पद्मपीठं चतुरश्राकारं कल्पयेत् । तस्योच्छ्रयोऽप्येकांश एव भवेत् । पद्मं वृत्ताकृति स्यात् । तस्य दलान्यष्टौ भवेयुः । प्रतिदलं च द्वौ द्वौ केसराविल्याहत्य षोडश केसरा अपि तत्र कल्प्यन्तामिति । श्रीकुमारस्तु—

"अधःपट्टं तदेकांशं तदधः पद्मपीठिकाम् ।
चतुरश्राकृतिं कुर्यादधःपट्टसमोन्नताम् ॥"

इति वदन् अधःपट्टमिदं पद्मपीठादन्यदेवेति मन्यते । इह केचित् साम्प्रदायिकाः अवशिष्टस्यैकांशस्य दलाग्रपट्टविषये विनियोगमार्थिकं मन्यमानाः 'तदेकांश'शब्दस्य 'सन्निहिताया अन्तर्या एकांश' इत्यर्थं वर्णयन्ति । स्वरसतस्तु पूर्वप्रकटितैव व्याख्या न्याय्येति प्रतिभाति ॥ ६ ॥

सूत्रपट्ट्याः मूलाग्रयोर्ये पङ्कजे निवेश्येते, तयोराकारमाह—

मूलाग्रपङ्कजे कार्ये ह्यर्धवृत्तविचित्रिते ।
पङ्क्तयश्च निरश्राश्च मुक्तादामविचित्रिताः ॥ ७ ॥

मूलाग्रेत्यादि । अर्धवृत्तविचित्रिते इति । अर्धपद्माकारे इत्यर्थः । अथ पूर्वं याः पङ्क्तयः क्षुद्रपट्टाकृतयः पद्मानामन्तरालप्रविष्टा उक्ताः, तासां भूषणमाह—पङ्क्तयश्चेत्यादि । अश्रिः कोटिः । मुक्तादामविचित्रिताः मुक्ताभिः तदाकृतिभिर्गुडिकाभिः दामभिः मालाकारैः सन्निवेशैश्च रमणीयाः । अयमभिप्रायः—मुक्तादामादिविचित्रशिल्पैः पङ्क्तीनामश्रयो विलोपनीया इति ॥ ७ ॥

एवं सूत्रपट्टस्य प्रमाणभूषणादिकमुक्तम् । अथेदानीं तदाधारस्य मात्राख्यवामकवाटपुटस्य मानमाह—

पट्टिकाचतुरंशैकयुतद्वारार्धविस्तृतम् ।
स्वबाहल्येन सहितं कवाटव्यासमिष्यते ॥ ८ ॥

पट्टिकेत्यादि । अयमर्थः—पूर्वं 'द्वारतारे चतुरश्रे'त्यादिना योऽयं सूत्रपट्टिकाया विस्तारः प्रदर्शितः, तं चतुर्धा विभज्य तदेकांशं, द्वारविस्तारस्यार्धांशं, स्वबाहल्यांशं च सङ्कलय्य लब्धेन मानेन मातृकवाटपुटस्य विस्तारं कुर्यादिति ॥ ८ ॥

पुत्रिकाख्यदक्षिणकवाटपुटस्य विस्तारं तु उक्तमातृकवाटपुटविस्तारात् सूत्रपट्टिकाविस्तारार्धांशपरिहाणेन कुर्यादित्याह —

पट्टिकार्धेन रहितैतावद्व्यासा च पुत्रिका ।

पट्टिकार्धेनेत्यादि ॥ ८½ ॥

उभयोरनयोः कवाटपुटयोर्घनमाह —

वस्वादिसंकृत्यन्तासु संख्यास्वेकैकमेव तत् ॥ ९ ॥

कवाटस्य तु बाहल्यं द्वारविस्तारमानतः ।

वस्वादीत्यादि । अस्यायमर्थः — 'उत्सेधशेषं परिषेद्वीरतारमुदाहृतमि' ति पूर्वाध्यायप्रकटिते द्वारविस्तारे वस्वादिसङ्कृत्यन्ताभिः सङ्ख्याभिः पृथक् पृथग् विभक्ते ततस्तत एकेनांशेन कवाटपुटयोर्घनं कल्पयेदिति । वसवः अष्टौ । सङ्कृतिः चतुर्विंशतिः । अनयोर्दैर्घ्यं तु द्वारायामसममित्यनुक्तसिद्धमिति नात्र प्रकटितम् । द्वारायामश्च 'प्रस्तरोत्तरयोर्मध्यं पञ्चधा विभजेद् बुधः । द्वारायामं चतुर्भागम्' इति पूर्वाध्यायान्ते प्रपञ्चितः ॥ ९,९½ ॥

अथ रङ्गपादाभिधयोः कवाटपुटमूलाग्रशिखयोर्विधानमाह —

रङ्गपादौ च कर्तव्यौ सुवृत्तावग्रमूलयोः ॥ १० ॥

स्वबाहल्यसमायामं सार्धं वा मूलपादकम् ।

भारबाहल्यसदृशमग्रपादायतं भवेत् ॥ ११ ॥

सार्धं वा द्विगुणं वा स्याद् यथाशोभं यथादृढम् ।

रङ्गपादावित्यादि । सुवृत्तौ सुतरां वर्तुलाकारौ । तयोर्मूलभागस्थशिखाया आयाममाह — स्वबाहल्येत्यादि । 'वस्वादी'त्यादिना यद् बाहल्यं कवाटस्योक्तं; तेन तुल्यं, ततोऽर्धाधिकं वा दैर्घ्यं मूलशिखायाः कार्यमित्यर्थः । अग्रभागस्थितशिखाया दैर्घ्यमाह — भारेत्यादि । भारो नाम द्वारस्तम्भ उपर्यधश्च तिर्यङ् निवेशितयोर्दारुणोः सङ्घटितः फलकविशेषः, यस्य प्रान्तयोः सुषिरं कृत्वा कवाटयोः शिखा योजयन्ति शिल्पिनः । अस्य लक्षणं समनन्तरश्लोके वक्ष्यति । तस्य भारस्य यद् घनं 'समं वा

पादहीनं वे'त्यादिना विधास्यति, तत्तुल्यामग्रशिखायतिं कुर्यादिति भावः। प्रकारान्तरमप्याह — सार्धं वेत्यादि। उक्तभारबाहल्यमानादर्धाधिकं द्विगुणं वा शोभानुरोधं दार्ढ्यानुरोधं चाग्रशिखादैर्घ्यं कार्यमित्यर्थः ॥
[१०–११½ ॥

अथ पूर्वप्रस्तुतस्य भारस्य मानमाह —

कवाटयोरतारसमं भारायाममुदीरितम् ॥ १२ ॥
विस्तारसदृशायामौ पुच्छौ भारस्य कीर्तितौ।
भारतारं प्रकर्तव्यं द्वारप्रतिसमादिभिः ॥ १३ ॥
समं वा पादहीनं वाप्यर्धं वा बहलं भवेत्।

कवाटयोरित्यादि। 'पट्टिकाचतुरंशे'त्यादिना 'पट्टिकार्धेने'त्यादिना च यः कवाटयोर्विस्तार उक्तः, तन्मानेन तुल्यं भारायामं कुर्यादिति तदर्थः। भारप्रान्तप्रसृतयोस्तत्पुच्छयोर्दैर्घ्यमाह — विस्तारेत्यादि। विस्तारश्च भारस्यैव। कियान् पुनर्भारस्य विस्तारः, तत्राह — भारतारमित्यादि। द्वारप्रतिसमादिभिरिति। द्वारस्य प्रतिर्नाम भाराधारभूता पतङ्गाख्या पट्टिका। तस्या विस्तारेण, समं भारविस्तारं कल्पयेदित्येकः प्रकारः। आदिशब्देन ततः पादाधिकोऽर्धाधिकश्च तद्विस्तारः कल्प्य इति अन्यावपि द्वौ प्रकारावुपदिष्टौ वेदितव्यौ। तथाच श्रीकुमारः —

"भारतारं प्रकर्तव्यं पतङ्गविततेः समम्।
सपादं वाथ सार्धं वा"

इति। भारस्य घनमाह — समं चेत्यादि। समादि चार्थात् स्वविस्तारेणैव भवति। एवञ्च भारबाहल्यं स्वविस्तारेण समं, ततः पादहीनं, ततोऽर्धं वेति त्रिप्रकारमिति सिध्यति ॥ १२—१३½ ॥

अथास्य भारफलकस्यादिमध्यान्तभागेषु किञ्चिदुच्छ्रूनं खण्डत्रयं कार्यमिति तस्य विधानमाह —

भारतारेऽङ्घिसम्भक्ते त्रीणि सूत्राणि पातयेत् ॥ १४ ॥

तिर्यक् सूत्रत्रयं कार्यं द्वारमध्येऽग्रयोरपि ।
आद्यसूत्रयुतिन्यस्तपादकर्किभ्रमेण तु ॥ १५ ॥
खण्डिवृत्तं प्रकर्तव्यं तृतीयात् सूत्रतो बहिः ।
एवं खण्डित्रयं कार्यं निम्नं मूलाग्रमध्यके ॥ १६ ॥
निम्नखण्डियुतिर्यत्र तत्र तत्र विचित्रितम् ।
पर्वमध्यगतं ह्यश्रं परित्याज्यं च शिल्पिभिः ॥ १७ ॥

भारतार इत्यादि । भारतारो भारविस्तारः । अब्धिसंभक्ते चतुर्धा विभक्ते । त्रीणि सूत्राणि, पातयेत्, लम्बाकारेणेत्यार्थम् । द्वारमध्येऽग्रयोरपि द्वारस्य मध्ये उभयोरग्रयोश्चेत्यर्थः । अयमभिप्रायः—भारफलकं हि द्वारस्य उपरितने अधस्तने वा तिर्यग्भूते स्तम्भे सन्धीयते । ततश्च तत्र द्वावग्रभागौ मध्यमेकमिति त्रीणि स्थानानि सम्भवन्ति । तेष्वेकैकं तिर्यक्सूत्रं लम्बसूत्रोपरि पातयेदिति । तथा च भारपुच्छयोरुपान्ते द्वे सूत्रे, मध्ये चैकमिति त्रयाणां सूत्राणां स्थानमुपदिष्टं भवति । सूत्रपातानन्तरकृत्यमाह—आद्य इत्यादि । लम्बसूत्रतिर्यक्सूत्रयोः आद्या युतिः योगो यत्र भवति, तत्र स्थाने न्यस्तः पाद एको यस्य, तादृशेन कर्किणा कर्क्याकारेण वृत्तसाधनयन्त्रेण यद् भ्रमितो भ्रमणं तेन । कर्कियन्त्रस्यान्यः पादस्तु भारफलकस्य बहिःपार्श्वे स्याद् इत्यर्थसिद्धम् । खण्ड्यर्थं वृत्तं तृतीयात् तिर्यक्सूत्राद् बहिर्भागं त्यक्त्वा कर्तव्यमिति पदार्थः । एवमेकत्र प्रदर्शितं खण्डिवृत्तकरणं खण्ड्यन्तरवृत्तकरणेऽप्यतिदिशति—एवमित्यादि । खण्डित्रयमिति । समनन्तरप्रदर्शितया खण्ड्या सह अन्ये द्वे खण्ड्याविति खण्डित्रयमित्यर्थः । एवञ्च खण्डित्रयकरणाय तिर्यक्सूत्रत्रयस्यावश्यकतया 'तिर्यक्सूत्रद्वयं कार्यमि'ति मुद्रितशिल्परत्ने दृष्टः पाठश्चिन्त्यः । अधस्तनभारखण्डीकरणाभिप्रायेण वा तस्य साङ्गत्यं सम्पादनीयम् । एवं वृत्ताकारेण खण्डित्रये निष्पादिते वृत्ताद् बहिर्भूताः भारफलकांशास्छेद्याः स्युः । तेन खण्डीनां मूलाग्रभागयोर्निम्नता स्यादित्यभिप्रायेणाह — निम्नमिति । भारफलके खण्डित्रयस्य स्थानमाह — मूलाग्रमध्यके इति । मूले मध्ये अग्रे चेत्यर्थः । 'नि-

ग्रमूलाग्रमध्यकम्, इति पाठे वृत्ताद् बहिर्भागस्य छेदने निम्नीभूतानि मूलाग्रमध्यानि मूलाग्रमध्यभागाः यस्य तदिति बहुव्रीहिराश्रयणीयः । खण्डीनां मध्यभागे निम्नता तु लक्ष्ये न दृश्यत इति पूर्व एव पाठोऽस्माभिरादृतः । निम्नभागस्य खण्डीत्रयस्य च सन्धिस्थानं पुष्पदलाद्याकारैर्विचित्रैः शिल्पैरश्निरहितं विदध्यादित्याह— निम्नखण्डियुतिरित्यादि ॥ १४—१७ ॥

अथ भारफलकस्य मूलाग्रभागस्थयोः खण्ड्योर्बहिः कवाटपुटपुच्छयोजनाय सुषिरकरणमाह —

**कार्ये च सुषिरे वृत्ते बहिस्तिर्यक्स्थसूत्रयोः ।**
**आद्यसूत्रबहिर्भागे त्वन्तराद्यं पदं भवेत् ॥ १८ ॥**

**कार्ये च सुषिरे** इत्यादि । पुटद्वयस्थितपुच्छद्वयापेक्षया सुषिरस्य द्वित्वम् । वृत्ते वृत्ताकारे, कवाटपुटद्वयस्थितपुच्छवृत्तसदृशवृत्ते इति यावत् । कार्ये, भारफलक इति शेषः । पुच्छयोर्वृत्ताकृतित्वं च 'रङ्गपादौ च कर्तव्यौ सुवृत्तौ' इत्यनेन प्रदर्शितम् । सुषिरस्थानमाह — बहिस्तिर्यक्स्थसूत्रयोः आद्यसूत्रबाहिर्भाग इति पदाभ्याम् । मूलाग्रखण्डिस्थानभूते तिर्यक्सूत्रे परित्यज्य प्रथमलम्बसूत्रस्य बहिर्भागमाश्रित्य सुषिरद्वयं कार्यमित्यर्थः । भारस्य कियानंशो द्वारतिर्यक्स्तम्भे प्रवेशनीय इत्यत्राह — **अन्तराद्यं पदं भवेदिति** । भारविस्तारे चतुर्धा विभक्ते एकमंशं दृढत्वाय द्वारतिर्यक्स्तम्भान्तः प्रवेशयेत् । अवशिष्टमेवांशं चतुर्धा विभज्य 'भारतारेऽब्धिसम्भक्त' इत्याद्युक्तविधया तत्र लम्बसूत्रत्रयमारफालनीयामिति भावः ॥ १८ ॥

अथोपरितनस्य भारफलकस्य सन्धानप्रकारमाह —

**युज्यतां द्वारपादाभ्यां प्रतेरूर्ध्वेऽर्धपाणिना ।**
**शूलकीलादिवेधैश्च करोतु दृढतां पुनः ॥ १९ ॥**

युज्यतामित्यादि । द्वारपादाभ्यां द्वारस्तम्भाभ्याम् । प्रतेरूर्ध्वे तिर्यङ्निवेशितोपरितनस्तम्भस्याग्रपट्टोपरि । अर्धपाणिनेति । अस्य सन्धेः स्वरूपं पुरस्तात् प्रकटितम् । तत्र दार्ढ्याय शूलकीलादिवेधश्च कार्य इ-

साह — शूलेत्यादि। शूलं शिखात्रययुक्तोऽन्यथा वा स्थितः आयसः शङ्कुः। कीलः दारुमयः। आदिशब्देन दार्ढ्यसाधकाः सन्दंशिन्यादयो ग्राह्याः॥ १९॥

एवमुपरितनस्य अधस्तनस्य च भारफलकस्य निर्माणप्रकारः प्रपञ्चितः। अथ तयोरधस्तनस्य निर्माणे वक्तव्यं विशेषमाह —

एवं कुर्यादधोभारं मध्यखण्डविवर्जितम्।
पदमाद्यं परित्याज्यं द्वितीये चावटद्वयम्॥ २०॥
रङ्गपादप्रमाणेन वर्तुलं चार्धनिम्नकम्।

एवमित्यादि। मध्यखण्डविवर्जितमिति। पूर्ववद् अधस्तनस्य भारस्य विस्तारे चतुर्धा विभक्ते आद्यमंशं द्वारस्तम्भान्तःप्रवेशनाय परित्यज्य द्वितीयेंऽशे पुच्छवृत्ततुल्यमेकैकं सुषिरं कार्यमित्याह — पदमाद्यमित्यादि। सुषिरनिम्नप्रमाणमाह — अर्धनिम्नकमिति। विस्तारार्धप्रमाणेन निम्नभागेन युतमित्यर्थः॥ २०, २०½॥

अथ मातृकवाटपुटे पूर्वप्रस्तुतायाः सूत्रपट्ट्या विन्यासविधिमाह —

पट्टिकाचतुरंशैकभागं नीत्वाथ पार्श्वतः॥ २१॥
मातृसंज्ञकवाटस्य सूत्रमन्तर्निपातयेत्।
प्रतिबाहल्यसदृशं नीत्वा मूलाग्रयोः पृथक्॥ २२॥
अर्धं वा पादहीनं वा मूले तन्मध्यसूत्रके।
ऊर्ध्वाग्रमेव तन्मध्ये विन्यसेत् सूत्रपट्टिकाम्॥ २३॥

पट्टिकेत्यादि। पट्टिकाचतुरंशैकभागमिति। मात्राख्यवामकवाटपुटे या विन्यसनीया पट्टिका सूत्रपट्टिकाख्या, तस्या एव विस्तारे चतुर्धा विभक्ते एकमंशमित्यर्थः। पार्श्वतो नीत्वा पट्टिकाया दक्षिणकवाटाभिमुखे पार्श्वे परित्यज्य अंशत्रयं वामकवाटपुटे लग्नं यथा भवेत् तथा कृत्वेति यावत्। सूत्रं निपातयेत् सूत्रपट्टिकां तत्र योजयेत्। कुत्र, मातृसंज्ञकवाटस्यान्तः वामकवाटपुटस्य अन्तः, अर्थात् पार्श्वे। तथा निवेशने उपर्यधश्च भाराश्रयभूतया पट्टिकया सदृढं परिहर्तुं सूत्रपट्टिकाया मूलाग्रभागयोः

पृथक् पृथक् त्यक्तव्यं कवाटफलकांशमाह— **प्रतिबाहल्यैत्यादि** । बाहल्यं घनम् । मूलभागे पुनस्तद्धनांशत्यागे प्रकारान्तरमप्याह— **अर्धं वा पादहीनं** चेति । उक्तप्रतिबाहल्यमानादित्यर्थम् । **तन्मध्यसूत्रके** इति सूत्रपट्टिकानिवेशनस्थानप्रदर्शनपरं वचनम् । तन्मध्यसूत्रके द्वारस्य मध्यसूत्रे इत्यर्थः । तत्र सूत्रपट्टिकाया निवेशने मूलाग्रभागयोजननियम-माह —**ऊर्ध्वाग्रमेवेति** । इदं च विन्यसनक्रियाविशेषणम् ॥ २१-२३ ॥

यान्यत्र पद्मानि योजनीयान्युक्तानि, तेषां निश्चलत्वाय तत्कर्णिका-मध्ये कीलाः स्थापनीयाः । कीलानां बहिर्दृश्यमानो भागः सरोजकोरकसन्नि-वेशेन तथाविधान्यपुष्पसदृशेन वा शिल्पेन परिष्कर्तव्य इत्याह —

सरोजकोरकाकारैः कीलैर्वा पुष्पसन्निभैः ।
पट्टिकां पद्ममध्येषु विद्धैः कुर्याच्च निश्चलाम् ॥ २४ ॥

**सरोजेत्यादि** । पट्टिकां निश्चलां कुर्यादित्यस्यायमभिप्रायः— पद्मदृढीकरणाय कर्णिकामध्येषु विद्धैरेव कीलैः कवाटफलके सूत्रपट्टिका-दृढीकरणमपि निर्वर्तनीयं, न पुनस्तदर्थे कीलान्तराणि योजनीयानीति । तथा च कर्णिकामध्ये विद्ध एक एव कीलः पद्मं सूत्रपट्टिकां कवाटपुटं च प्रविष्टो यथा भवेत् तथा तस्य दैर्घ्यं कल्प्यमित्युक्तं भवति ॥ २४ ॥

अथान्तर्भागे द्वयोः पुटयोर्गलकीलस्थापनाय योजनीयस्य अरमाख्यस्य भारविशेषस्य निर्माणादिकमाह —

द्वारायामशरांशैकमरमायाममीरितम् ।
युगवह्न्येकभागं वा षट्पञ्चैकांशविस्तरम् ॥ २५ ॥

व्यासपादोनमर्धं वा समं वा बहलं विदुः ।
अधोभारसमाकारा कीर्तिता शिल्पवित्तमैः ॥ २६ ॥

**द्वारायामेत्यादि** । द्वारायामः द्वारोत्सेधः, तस्मिन् पञ्चधा विभक्ते एकांशेन अरमायामः कार्य इति तदर्थः । अथवा द्वारायामे चतुर्धा त्रिधा वा विभक्ते एकेनांशेन अरमायामः कार्य इत्याह — **युगवह्न्येकभागं**

चेति । युगाः चत्वारः । वह्नयः त्रयः । तस्या विस्तारमाह— **पद्पञ्चैकांशविस्तरामिति** । अरमायामे षोढा पञ्चधा वा विभक्ते एकांशेन तस्या विस्तारः कल्प्य इत्यर्थः । तस्या घनमाह — **व्यासेत्यादि** । व्यासो विस्तारः, स चार्थात् स्वस्यैव । तस्मात् चतुर्थांशहीनम् अरमाघनं कुर्यादित्येकः प्रकारः । स्वस्य विस्तारार्धं, विस्तारसमं वा तद्घनं कुर्यादिति द्वौ प्रकारावित्याहत्य त्रिप्रकारा बाहल्यकल्पनेति समुदितोऽर्थः । अरमायाः सन्निवेशमाह — **अधोभारेत्यादि** । 'अधोभारं मध्यखण्डविवर्जितमि'ति पूर्वमुक्तम् । तत्सन्निवेश एवारमाया अपि कार्य इत्यर्थः ॥ २५, २६ ॥

अथ तत्र कदलीविधानमाह —

**तदायामेऽब्धिसंभक्ते त्यजेदेकैकमग्रयोः ।**
**मध्ये निधाय द्वितयं तत्सन्धात्रर्गलस्य च ॥ २७ ॥**
**कुर्याच्च कदलीं तत्र ह्यर्गलस्य प्रमाणतः ।**

**तदायाम** इत्यादि । तदायामे अरमादैर्घ्ये । अब्धयः चत्वारः । अग्रयोः, अर्थाद् अरमाया एव । अवशिष्टस्य भागद्वयस्य विनियोगमाह— **मध्य** इत्यादि । अरमाया मध्ये एको भागः, तस्या अर्गलस्य च सन्धौ एको भागश्च विनियोक्तव्य इत्यर्थः ।

"कलिका द्वारसन्धार्या या स्यात् तामर्गलां विदुः ।"

इत्यर्गलास्वरूपमन्यत्र प्रकटितम् । "अर्गलं न ना" इत्यमरः । **कुर्याचे**त्यादि । तत्र सन्धौ । कदलीं अर्गलप्रवेशनार्थाम् । प्रमाणतः विस्तारानुरोधेन ॥ २७, २७½ ॥

अथार्गलायामादिकमाह—

**कवाटव्याससदृशमर्गलस्यायतं विदुः ॥ २८ ॥**
**पादोनं वा तदष्टांशादेकं तत्तारमेव च ।**
**तारार्धं बहलं कुर्यात् खण्डौ बाहल्यतुल्यकौ ॥ २९ ॥**
**मूलखण्डः समाख्यातः स्वव्याससदृशायतः ।**
**अर्धं वा पादहीनं वाप्यग्रखण्ड्यायतं भवेत् ॥ ३० ॥**

**कवाटेत्यादि** । अयमभिप्रायः — द्वयोः पुटयोर्हि पृथक् पृथगेकैकामरमाम्, अरमोपश्लिष्टामेकैकामर्गलां च निवेशयन्ति । ततश्च तत्तत्पुटस्थिताया अर्गलाया आयामः तत्तत्पुटविस्तारतुल्य एव भवेदिति । अत्र प्रकारान्तरमपि दर्शयति — **पादोनं चेति** । पादः चतुर्थांशः । कवाटपुटविस्तारात् चतुर्थांशहीनो वार्गलायामो भवेदित्यर्थः । अर्गलाया विस्तारमाह — **तदष्टांशादेकं तत्तारमिति** । स्वायामेऽष्टधा विभक्ते एकांशेन स्वस्य विस्तारः स्यादित्यर्थः । तस्या एव घनमाह — **ताराधं बहलं कुर्यादिति** । स्पष्टार्थम् । अथार्गलापृष्ठे मूले अग्रे च निरर्गलप्रवेशरोधनाय किञ्चिदुन्नते ये खण्डौ क्रियेते, तयोर्मानमाह — **खण्डावित्यादि** । खण्डस्य चास्य अर्गलापृष्ठमिति साधारणो व्यवहारः । बाहल्यतुल्यकौ, अरमाबहलसदृशघनावित्यर्थः । तयोर्मूलभागस्थस्य खण्डस्य दैर्घ्यमाह — **मूलेत्यादि** । इह स्वशब्देन अर्गला ग्राह्या । अग्रभागखण्डस्य तु दैर्घ्यं मूलखण्डदैर्घ्यादर्धमानेन, ततः चतुर्थांशहीनमानेन वा कार्यमित्याह — **अर्धं चेत्यादि** । सुगमोऽर्थः ॥ २८—३० ॥

अथास्यामेवाग्रखण्डानन्तरं पुटान्तरस्थितारमाया प्रवेशनाय पुच्छाकारेण कश्चिद् भागो योक्तव्य इति तस्य प्रमाणमाह—

अरमाबहलायामं तत्पुच्छं कथितं बुधैः ।

**अरमाबहलायाममित्यादि** । अरमाबहलं च 'व्यासपादोनमि'त्यादिना पूर्वं प्रदर्शितम् । अर्गलामूलभागे तु खण्डमेव केवलं क्रियत इति सम्प्रदायः ॥ ३०½ ॥

एवं पुटद्वयवतः कवाटस्य लक्षणादिकं प्रपञ्चितम् । तदेतत् कवाटं प्रधानद्वारे उपद्वारे च योज्यम् । केचित् पुनः उपद्वारे एकपुटं वा कवाटं योज्यमित्यभिप्रयन्ति । तत्पक्षे तल्लक्षणमपि वक्तव्यतया प्रसक्तं मन्यमान आह —

एकं वा स्यादुपद्वारकवाटमिति केचन ॥ ३१ ॥

**एकं वेत्यादि** ॥ ३१ ॥

तस्य मानमाह —

द्वारतारं कवाटस्य बहलद्वयसंयुतम् ।

**द्वारतार**मित्यादि । अयमर्थः — उपद्वारस्य यो विस्तारः कल्पितः तेन सह प्रकृतपुटस्य घनं द्विगुणीकृत्य योजने यल्लभ्यते, तदेव मानं तस्य विस्तारे कल्प्यमिति । इह विशेष्य बाहल्यनिर्देशनाद् 'वस्वादिसङ्कृत्यन्तास्वि'त्यादिना पूर्वमुक्तो बाहल्यविधिरेत्रापि ग्राह्यः । द्वारविस्तारस्तु द्वारविन्यासाध्याये प्रपञ्चितः ॥ ३१½ ॥

द्वारस्तम्भेन सङ्घट्टनाय कवाटपुटस्य मूलाग्रभागयो रङ्गपादः कर्तव्यत्वेन योऽयं पूर्वमुक्तः, स इहैकपुटे पुनर्वामभागे योज्य इत्याह —

मूलाग्रयोर्वामभागे रङ्गपादद्वयं भवेत् ॥ ३२ ॥

**मूलाग्रयो**रित्यादि । **रङ्गपादद्वय**मिति । मूलभागे एकः अग्रभागे एक इत्याहत्य द्वौ रङ्गपादावित्यर्थः ॥ ३२ ॥

अस्य रङ्गपादस्य योजनार्थोपरि निवेशनीयस्य भारस्यायामं प्रदर्शयति —

आयतं भारवह्न्येकमर्धं भारस्य कीर्तितम् ।
अस्य खण्डी भवेदेका मूलाग्रौ भारवत् स्मृतौ ॥ ३३ ॥

**आयत**मित्यादि । **भारवह्न्येक**मिति । पुटद्वयवतः कवाटस्योक्ते भारायामे त्रिधा विभक्ते एकांशेनास्यभारायामः कार्य इत्यर्थः । पुटद्वययुक्तस्य तस्य भारायामश्च 'कवाटयोस्तारसमं भारायाममुदीरितम्' इति पूर्वं प्रदर्शितः । अथवा तादृशे भारायामे द्विधा विभक्ते एकांशेन वास्य भारायामं कुर्यादित्याह — **अर्ध**मिति । अत्र खण्डीनियममाह — **अस्य खण्डी भवेदेके**ति । अस्य एकपुटककवाटस्थितस्योपरितनस्य भारस्य । एका चासौ खण्डी रङ्गपादपार्श्वे स्यादिति मन्तव्यम् । **मूलाग्रौ भारवत् स्मृता**विति । अस्यैव भारस्य मूलाग्रभागयोर्निम्नीकरणं, निम्नसन्धौ पुष्पदलाद्याकारैर्विचित्रीकरणं च पूर्वोक्तप्रकारेण कार्यमित्यर्थः ॥ ३३ ॥

एवमत्रोपरितनभारलक्षणं प्रदर्शितम्। अधस्तात् तु विशेषमाह—

गर्तशङ्कुश्च कर्तव्यो वितस्त्यायत एव सः ।
कवाटबहलद्विघ्नबहलव्यास एव च ॥ ३४ ॥

**गर्तशङ्कुरित्यादि।** अधस्तनरङ्गपादप्रवेशाय अत्र शङ्कौ गर्तः क्रियते। अतश्च गर्तार्थः शङ्कुरिति वा गर्तयुक्तः शङ्कुरिति वा तस्य व्युत्पत्तिर्ज्ञेया। 'वितस्तिर्द्वादशाङ्गुल' इति साधनकथनाध्याये उक्तम्। अस्य शङ्कोर्विस्तारं घनं च प्रदर्शयति — **कवाटेत्यादि।** शङ्कावस्मिन् युज्यमानस्य कवाटस्य यद् घनं कल्पितं, तद् द्विगुणं कृत्वा तन्मानेन तस्य विस्तारं घनं च कुर्यादित्यर्थः ॥ ३४ ॥

अथास्मिन् सुषिरकरणमाह—

विभजेदूर्ध्वदेशेन द्विधा चैकतरे पदे ।
पदायतव्यासमध्यन्यस्तकर्किभ्रमेण च ॥ ३५ ॥
गर्तं वृत्तं पदे कुर्याद् रङ्गपादार्धनिम्नकम् ।
अष्टाश्रं च ततः कार्यं हस्तिपृष्ठाभमेव वा ॥ ३६ ॥

**विभजेदित्यादि।** शङ्कूर्ध्वभागघनं द्विधा विभज्यैकस्मिन् भागे सुषिरं कुर्यादित्यर्थः। तदेव प्रपञ्चयति — **पदायतेत्यादि।** उक्ते पदे रङ्गपादवृत्तसदृशवृत्ताकारं गर्तं कुर्यात्। कया विधया, पदायतव्यासमध्यन्यस्तकर्किभ्रमेण। पदस्यायामविस्तारयोर्मध्यप्रदेशे विन्यस्तेन कार्कियन्त्रेण यदभितो भ्रमणं, तेन। गर्तस्य निम्नप्रमाणमाह — **रङ्गपादार्धनिम्नकम्** इति। 'स्वबाहल्यसमायामं सार्धं वा मूलपादकाभे'त्यधस्तनस्य कवाटपुच्छस्य यदामूलाग्रं दैर्घ्यं विहितं, तस्यार्धमानप्रमितो निम्नप्रदेशः स्यादित्यर्थः। अस्य शङ्कोः सन्निवेशमाह — **अष्टाश्रमित्यादि** ॥ ३५, ३६ ॥

अत्रार्गलाबन्धोपयोगिन्यरमा तु द्वारदक्षिणस्तम्भ एवान्तर्भागमाश्रित्य निबध्यते, न कवाटपुट इति वक्ष्यति। तस्य अरमाया विधानमाह—

अस्यारमार्धभारामा कीर्तिता शिल्पकोविदैः ।

**आयामं तद्द्वयं प्रोक्तं व्यासेन विभजेत् पुनः ।**
**त्रिधा तन्मध्यमे भागे क्रियेतार्गलरन्ध्रकम् ॥ ३८ ॥**

अस्येत्यादि । अर्धभारामा अर्धभारसदृशाकारा । 'ऊर्ध्वभारामे'ति पाठान्तरम् । अस्या विस्तारमाह — व्यासं कवाटबहलत्रिनयमिति । तत्कवाटपुटस्य यद् घनं कल्पितं, तत् त्रिगुणितं कृत्वास्या विस्तारं कुर्यादित्यर्थः । वाशब्देन प्रकारान्तरमपि प्रतीयते । तदेतत् —

"अस्यारमार्धभाराभा कवाटघनमानतः ।
त्रिगुणं वास्य विस्तारः"

इति श्रीकुमारेण विवृतम् । अथ दैर्घ्यमाह — **आयामं तद्द्वयं प्रोक्तमिति** । तद्द्वयं विस्ताराद् द्विगुणम् । अस्यामरमायाम् अर्गलायोजनाय करणीयस्य सुषिरस्य स्थानमाह — **व्यासेन विभजेदित्यादि** । व्यासेन त्रिधा विभजेदित्यन्वयः । प्रथमो द्वितीयस्तृतीय इति विभागकल्पनेन व्यासं त्रिधा विभक्तं कुर्यादित्यर्थः । एवं यथाक्रमं कल्पितेषु त्रिषु विस्तारभागेषु द्वितीयो भागः रन्ध्रस्थानं भवतीत्याह — **तन्मध्यमे भाग इत्यादि** ॥ ३७, ३८ ॥

अस्यार्गलारन्ध्रस्य सन्निवेशमाह —

**समतुर्यश्रकं वा स्याद् वृत्तं वा तद् यथोचितम् ।**
**स्तम्भपार्श्वात् कवाटस्य पार्श्वान्तं बहलं स्मृतम् ॥ ३९ ॥**

समतुर्यश्रकमित्यादि । समतुर्यश्रकं समचतुरश्राकारम् । अथारमाया घनमानमाह — **स्तम्भपार्श्वादित्यादि** । अयमभिप्रायः — कवाटे योजिते सति अन्तः द्वारदक्षिणस्तम्भपार्श्वादारभ्य कवाटफलकापर्यन्तं यन्मानं स्यात् , तदेव तत्रस्यारमाया घनं भवेदिति ॥ ३९ ॥

अथात्रत्यार्गलमानमाह —

**तावदर्गलबाहल्यमायामं तत्त्रयं स्मृतम् ।**
**बहलेन समं पुच्छं पादोनं वा प्रकीर्तितम् ॥ ४० ॥**

तावदिति। यावदरमाया बाहल्यमतीतश्लोके प्रकटितं, तावदित्यर्थः। बाहल्यात् त्रिगुणं स्वस्य दैर्घ्यं कल्पयेदित्याह — **आयामं तत्त्रयं स्मृतम्** इति। चतुर्गुणपक्षोऽपि शिल्परत्ने दृश्यते। अर्गलाग्रभागस्थपुच्छमानमाह— **बहलेन समं पुच्छमित्यादि**। पुच्छं पुच्छदैर्घ्यम्। पादोनं, बाहल्यादित्यार्थम्॥ ४०॥

पुच्छसंनिवेशमाह—

समतुर्यश्रकं वा स्याद् वृत्तं वा तत् प्रकीर्तितम्।
बहलस्य त्रिभागैकं नीत्वा तस्याग्रमूलयोः॥ ४१॥

तदन्तरायतं गर्तं कुर्यात् तत्तारमुच्यते।
स्वबाहल्यत्रिभागैकं व्यासनिम्नं तथैव च॥ ४२॥

**समतुर्यश्रकं** वेत्यादि। अथार्गलायां कीलवेधाय सुषिरकरणमाह — **बहलस्येत्यादि**। नीत्वा त्यक्त्वा। तस्य अर्गलस्य। तदन्तः अर्गलस्य मध्ये। तत्तारः गर्तविस्तारः। स्वबाहल्यं 'तावदर्गलबाहल्यमि-त्यनेन पूर्वं प्रदर्शितमर्गलबाहल्यम्। व्यासनिम्नं गर्तविस्तारो गर्तनिम्नभागश्च॥ ४१, ४२॥

अरमार्गलयोः कीलवेधप्रकारमाह—

अरमाभ्यन्तरे भागे पृष्ठे वा सुषिरं भवेत्।
सुषिरे कीलवेधः स्याद् विद्धमर्गलगर्तके॥ ४३॥

**अरमाभ्यन्तर** इत्यादि। विद्धमर्गलगर्तक इति। इदमेवं विवृणोति श्रीकुमारः —

"विन्यसेदर्गलं पुनः।
स्वाभ्यन्तरस्थकीलेन विद्धगर्तं यथा तथा।
अरमासुषिरे सम्यग् वामाग्रं शिल्पवित्तमैः॥"

इति॥ ४३॥

द्वारस्तम्भे कवाटयोजनपरिपाटीमाह—

विन्यस्य तदधो भारं शङ्कुं द्वितयमेव वा।
तद्गर्ते विन्यसेत् सम्यग् वामभागेऽथ मातरम्॥ ४४॥

ऊर्ध्वाधोभारयोः पद्भ्यां यथायोगं तथा न्यसेत् ।
पुत्रिकां दक्षिणे भागे चैकं चेद् वामतः स्मृतम् ॥ ४५ ॥
अरमा दक्षिणस्तम्भे तत्र स्याच्छृङ्खलैव वा ।
आयसैः कीलकैः सम्यग् विद्धं भारादिकं न्यसेत् ॥ ४६ ॥

विन्यस्येत्यादि । तदधः द्वारस्तम्भस्याधस्तात् । भारमिति । द्विपुटककवाटयोग इति शेषः । शङ्कुमिति । एकपुटककवाटयोग इत्यार्थम् । द्वितयमेव चेति द्विपुटकेऽपि भारशङ्क्वोरुभयोर्योजनपक्षमाश्रित्योक्तम् । 'शङ्कुद्वितयमेव वे'ति पाठः द्विपुटक एव अधोभारयोजनाभावपक्षाभिप्रायकत्वेन योज्यः । तद्गर्ते भारगर्ते शङ्कुगर्ते वा । ऊर्ध्वाधोभारयोरिति । द्विपुटके ऊर्ध्वमधश्च भारौ भवतः । एकपुटके तु ऊर्ध्वभारे अधस्तनशङ्कौ चेति विवेकः । पद्भ्यां रङ्गपादाभ्याम् । दक्षिणे भागे, द्वारस्तम्भस्येत्यार्थम् । एवं वामभागोऽपि व्याख्येयः । एकं चेत् , कवाटमेकपुटकं चेदित्यर्थः । वामतः वामभागे न्यसनं स्मृतमिति सम्बन्धः । तत्र एकपुटककवाटविषये अरमा दक्षिणस्तम्भे स्यादिति योगः । अरमायोजने पक्षान्तरमाह—शृङ्खलैव वा इति । द्विपुटकेऽप्ययं पक्षः समानः । सर्वसामान्यविधिमाह— आयसैरित्यादि । स्फुटार्थम् ॥ ४४–४६ ॥

इति वास्तुविद्यालघुविवृतौ कवाटद्वारविन्यासो नाम
चतुर्दशोऽध्यायः ।

---

## अथ भवनपरिग्रहो नाम पञ्चदशोऽध्यायः ।

अथ गृहावयवेष्ववशिष्टानां भित्तितुलादीनामपि लक्षणं, भवनपरिग्रहप्रकारं च प्रदर्शयितुं पञ्चदशमध्यायमारभते । तत्र प्रथमं कवाटद्वारविन्यसनप्रसङ्गाद् भित्तिलक्षणे वक्तव्यतया प्रसक्ते तत्साधनमादौ दर्शयति—

शिलया च मृदाप्यथवा तरुणा
रचयेदथ कुड्यमतीव दृढम् ।

तदिहोत्तरविस्तरतः सदृशं
बहलं कथितं तलिपादियुतम् ॥ १ ॥
स्वोत्सेधात् तु शतांशैकहीनमस्तकमेव च ।
कुड्यं कुर्याद् बहिर्भागे स्वान्तर्भागं भवेत् समम् ॥ २॥

शिलयेत्यादि । तत्र शिला पाषाणखण्डं, पक्वेष्टका, शर्करा-प्रचुरात् प्रदेशात् खण्डशो विभिद्य गृह्यमाणः इष्टकाविशेषो वा भवति । मृत् चिक्कणा । तरुः शाकादिसारदारुफलकम् । एवमिह साधारणानि भित्तिसाधनानि प्रदर्शितानि । अन्यान्यपि तत्साधनानि विषयभेदात् सम्भवन्ति । एभिः साधनैर्गृहाणां नामानि च पृथग् भिद्यन्ते । तथाचाभि-युक्ताः —

"गृहं तु विविधं प्रोक्तं शरीरैस्तु पृथग्विधैः ।
पाषाणैर्निचितं यत्र तद्गृहं मन्दिरं स्मृतम् ॥

पक्वेष्टकं वास्तुनाम भवनं हितमुत्तमम् ।
आमेष्टकं सुमन्तं तु सुधारं कर्दमेन तु ॥

मानस्यं वर्धितं काष्ठैर्वेणुभिर्नन्दनं स्मृतम् ।
वस्त्रैश्च विजयं प्रोक्तं राज्ञां शिल्पिविकल्पितम् ॥

कालिमेति च विज्ञेयमष्टमं तृणजातिभिः ।
उत्तमानि तु चत्वारि गृहाणि गृहमेधिनाम् ॥

सौवर्णं राजतं ताम्रमायसं च प्रकीर्तितम् ।
सौवर्णं पुष्करं नाम राजतं श्रीमयं तथा ॥

ताम्रेण सूत्रमन्तं तु चण्डनाम तथायसम् ।
देवदानवगन्धर्वयक्षराक्षसकिन्नरैः ॥

द्वादशैते प्रकारास्तु गृहाणां नियताः स्मृताः ।
जातुरं त्वानिलं नाम त्रापुषं वारिबन्धनम् ॥

एवञ्जातिषु सर्वासु गृहाणि च चतुर्दश ।"

इत्यादि । एवञ्च शिला, मृत् , दारु इति त्रीण्येव भित्तिसाधनानि गृहस्थानामुचितानीति कृत्वा तान्येवेह ग्रन्थकारेण परिगणितानीति मन्तव्यम् । शिलामयादीनां कुड्यानां लक्षणमेवमाह श्रीकुमारः—

"तत् कुड्यं पञ्चधा प्रोक्तं तत्तद्द्रव्यविशेषतः ।
शिलामयं चैष्टकं च जालकामयमित्यपि ॥

फलकामयमप्येतन्मृन्मयं च परं पुनः ।
यथार्हव्यासतुङ्गं च कुड्यं शैलं शिलामयम् ॥
तथैवेष्टकया कार्यं कुड्यं स्यादिष्टकामयम् ।
नानाजालकनिष्पाद्यं कुड्यं यज्जालकामयम् ॥
यथार्हस्तम्भविन्यासं शस्तदारुमयक्रियम् ।
फलकाभिश्चितं मध्ये कुड्यं स्यात् फलकामयम् ॥
सार्धाङ्गुलं समारभ्य यवैकैकविवर्धनात् ।
फलकाया घनं प्रोक्तं त्र्यङ्गुलान्तं मनीषिभिः ॥
मृत्तिकाभिः प्रशस्ताभिः कषायसलिलादिभिः ।
मर्दिताभिश्च रचितं यत् कुड्यं तत्तु मृन्मयम् ।"

इति । तदित्यादि । तत् कुड्यम् । उत्तरविस्तरतः उत्तरविस्तारेण । उत्तरविस्तारश्चाष्टमाध्याये प्रदर्शितः । बहलं घनम् । तलिपः भित्त्युपाश्लिष्टः स्तम्भः । आदिशब्देन वेदिका ग्राह्या । भित्तिविस्तारस्तु —

"भित्तिस्तम्भस्य तारो यस्तेन द्वित्रिचतुर्गुणम् ।
पञ्चषड्गुणकं वाथ भित्तिविष्कम्भमिष्यते ॥

क्वचित् तद्वारबहलतुल्यं भित्तेर्विशालकम् ।
अष्टाङ्गुलं समारभ्य द्व्यङ्गुलविवर्धनात् ॥

यावद् द्विहस्तकं तावत् कुर्याद् वा भित्तिविस्तृतम् ।"

इति शिल्परत्ने प्रकटितः । अयं च भित्तेर्मूलविस्तारो भवति । अस्या अग्रविस्तारमाह — स्वोत्सेधात् तु भागांशैरित्यादि

उत्सेधश्चेह भित्तेरेव भवति । स च मूलभागस्य इत्यर्थः । 'स्वोत्सेधदर्शांशैके'त्यादिपाठस्तु "स्वस्योत्सेधशतांशकहीनं कुड्याग्रविस्तरमि"ति शिल्परत्नवाक्येन विरुध्यते । अयं च नियमः बहिर्भाग एव, नान्तर्भाग इत्याह — कुड्यं कुर्यादित्यादि । समामिति । मूलाग्रयारीति शेषः । "स्तम्भवद् वा बहिर्भागमि" ति श्रीकुमारः ॥ १,२ ॥

अथ भित्त्युपरि उत्तरस्थापनाविधिमाह—

सुमुहूर्ते सुनक्षत्रे शुक्लपक्षे शुभोदये ।
स्नातोऽनुलिप्तः स्थपतिः कुर्यात् पञ्चाङ्गभूषणम् ॥ ३ ॥
विप्रेभ्यो दक्षिणां दत्त्वा द्रव्यैः सन्तोष्य तक्षकान् ।
गणेश्वरं च सम्पूज्य पुण्याहं कारयेत् ततः ॥ ४ ॥
मुहूर्तदक्षिणां दत्त्वा वासोभिश्छन्नमुत्तरम् ।
कुड्येषु स्थाप्यतां सम्यगथवाङ्घ्रिषु विन्यसेत् ॥
स्वस्तिसूक्तादिकान् मन्त्रान् प्रजपेत् संस्पृशन् पुनः ।
संयुज्य चोत्तरैः पश्चात् परितश्चूलिकां न्यसेत् ॥ ६ ॥

सुमुहूर्त्त इत्यादि । पञ्चाङ्गभूषणमिति । शिरोहस्तकण्ठकर्णपादात्मकेषु पञ्चस्वङ्गेषु यद् भूषणं मुकुटवलयादि, तदित्यर्थः । उत्तरस्थापनकर्तृत्वाद् विश्वकर्मस्वरूपत्वाच्च स्थपतेरग्रपूजा विहिता । तक्षकादीनामपि लक्षणं प्रथमाध्याये निरूपितम् । मुहूर्तदक्षिणां दत्त्वा, मौहूर्तिकायेति शेषः । अङ्घ्रिष्विति मित्त्यभावपक्षाभिप्रायकं वचनम् । अ-ध्रयः स्तम्भाः । प्रजपेदिति । अत्र देशिकः कर्ता उत्तरैः । संयुज्येति । भित्तीरिति शेषः । संयोज्येत्यर्थे संयुज्येति पठितम् । चूलिका भित्त्युपरि पादोपरि वा परितो निधीयमान उत्तरविक्षेपः । अस्या लक्षणमष्टमाध्याये प्रपञ्चितम् ॥ ३—६ ॥

अथ तत्र तुलायोजनमाह—

कीलवेधैर्दृढीकृत्य तुलाभिर्योजयेद् बुधः ।
तुलानां विस्तरं कुर्यादुत्तरेण समादिकम् ॥ ७ ॥

तुलानां भूपणं कुर्यात् सूत्रपट्टिकया सदृक् ।
पङ्कजान्यत्र युग्मानि पङ्क्तयोऽयुग्मकाः स्मृताः ॥ ८ ॥

कीलवेधैरित्यादि । तुलानां मानादिकमाह— **तुलानां विस्तरमित्यादि** । उत्तरेण खाधारमूलेन । **समादिकमिति** । आदिशब्देन ततः पादहीनमर्धं च निवाक्षितमिति ग्रन्थान्तरात् प्रतीयते । **सूत्रपट्टिकया सदृक्** इति । सूत्रपट्टिका च कवाटद्वारविन्यासाध्याये प्रदर्शिता । सन्निवेशमात्रमिह सूत्रपट्टिकातुल्यं विवक्षम् । पङ्कजसङ्ख्यादिषु तु अस्त्येव विशेष इत्याह — **पङ्कजान्यत्रेत्यादि** । अत्र तुलायाम् । सूत्रपट्टिकायां हि पङ्कजान्ययुग्मानि, पङ्क्तयो युग्माश्च भवेयुरित्युक्तं पुरस्तात् । तेषां निर्माणाविकं तु सूत्रपट्टिकोक्तविधया कार्यम् ॥ ७,८ ॥

यत्रारूढोत्तरं वाह्योत्तरं च भवत, तत्रारूढोत्तरोपरि तुला निवेश्यते । तथा निवेशने च वाह्योत्तरोपरि आरूढोत्तरनिवेशितुलासम्बद्धमेकं दीर्घाकारं दारु स्थापनीयम् । तस्यास्य तुलाङ्घ्रिशब्दव्यपदिष्टस्योच्छ्रयमाह —

अलिन्दतारसदृशं तुलाङ्घ्र्युच्छ्रयमिष्यते
आरूढबाह्योत्तरयोरलिन्दं मध्यमुच्यते ॥ ९ ॥

**अलिन्देत्यादि** । अलिन्दस्वरूपमाह —**आरूढबाह्येत्यादि** । आरूढबाह्योत्तरयोर्मध्यमलिन्दमुच्यत इति योजना । 'शालाग्रे वलभी या स्यादलिन्देति वदन्ति ताम्'' इति ग्रन्थान्तरवचनम् ॥ ९ ॥

अथारूढोत्तरमानमाह—

आरूढोत्तरविस्तारमुत्तरेण समादिकम् ।
न्यूनं तस्य तु पर्यन्तं चतुष्पष्ट्यङ्गुलादिकम् ॥ १० ॥

**आरूढोत्तरेत्यादि** । उत्तरेण बाह्येन । **समादिकमिति** । आदिशब्देन तुलाङ्घ्रिविस्तारेणापि सममारूढोत्तरविस्तारं कुर्यादिति सूचयतीति साम्प्रदायिकाः । तस्य आरूढोत्तरस्य । पर्यन्तं परितो मानम् । न्यूनं, बाह्योत्तरपर्यन्तमानादित्यार्थम् । कियन्न्यूनमित्याकाङ्क्षायामाह— **चतुष्पष्ट्यङ्गुलादिकमिति** । अत्रापि तद्द्विगुणम् अष्टाविंशत्यधिकशताङ्गुलमानमादिशब्दग्राह्यं भवति ॥ १० ॥

अथ तुलासङ्ख्यादिकमाह —

युग्मा ह्येव तुलाः कार्या अयुग्माः पङ्क्तयः स्मृताः ।
तुलोपर्युत्तरं कार्यमारूढं चूलिकान्वितम् ॥ ११ ॥

युग्मा इत्यादि । आरूढोत्तरं तुलाधारत्वेन पूर्वमुक्तम् । इदानीं तत्र पक्षान्तरमाह — तुलोपरीत्यादि । तुलोपरि, बाह्योत्तरनिखाततुलापादोपरि निवेशितायास्तुलाया अप्युपरीत्यर्थः । आरूढमुत्तरं कार्यमिति सम्बन्धः । तत्र विशेषमाह—चूलिकान्वितमिति । चूलिका पर्यन्तोत्तरमित्युक्तं पुरस्तात् ॥ ११ ॥

एवमुत्तरं विन्यस्य तदुपरि वंशपादाभिधान् कीलविशेषानवस्थाप्य तेषु वंशं स्थापयेत् । वंशाग्राभ्यां च कूटौ संयोज्यायसकीलैर्दृढीकुर्यादित्याह —

वंशपादाश्च कर्तव्यास्तेषु वंशं न्यसेत् पुनः ।
वंशेन कूटौ युज्येतां कीलवेधदृढीकृतौ ॥ १२ ॥

वंशपादाश्चेत्यादि । वंशपादमानं तु—

"वंशस्य तारद्विगुणमध्यर्धं वास्य विस्तृतम् ।
तत्पादमस्य तु घनं त्रिपादं वा समाचरेत् ॥
लुपाग्रशिखयैवैनं दृढीकृत्य न्यसेत् तु वा ।"

इति शिल्परत्ने प्रकटितम् । वंशकूटस्वरूपादिकं द्वादशाध्याये प्रपञ्चितम् । उत्तरोपरि तुलानिवेशनपक्षे तु —

"तुलायां न्यस्य वंशाङ्घ्रिं वंशं वा तत्र विन्यसेद् ।"

इति श्रीकुमारोक्तो विधिरेष्टव्यः ॥ १२ ॥

वंशे स्थापिते तत्र सर्वासां लुपानामग्राण्यारोप्य कीलैश्च तत्र दृढतामापाद्य लुपासु वलयमपि तद्बन्धनयुक्तं कारयेदित्याह—

आरोप्यन्तां लुपाः सर्वाः सम्यक् कीलैश्च वेधयेत् ।
वेधं तु वलयानां च कृत्वा वलयबन्धनम् ॥ १३ ॥

वलयत्रिगुणव्यासं वहलं व्यासपादतः ।
भूषणादीनि सर्वाणि तुलाया इव कारयेत् ॥ १४ ॥

आरोप्यन्मामित्यादि । वलयबन्धप्रमाणं तु पूर्वमनुक्तमिहोच्यते — वलयं त्रिगुणेत्यादि । व्यासो विस्तारः । बहलं घनम् । व्यासपादतः स्वविस्ताराच्चतुर्थांशेन । तुलाया इव कारयेदिति । श्रीकुमारस्तु —

"नानापत्रविचित्राद्यैर्भूषयेत् तद् यथारुचि"

इत्याह ॥ १३,१४ ॥

नीव्रपट्टिं च विन्यस्य पट्टिकाश्चापि विन्यसेत् ।
प्रत्येकं नीव्रकोणेषु पारावतमथ न्यसेत् ॥ १५ ॥
नीव्रसन्ध्यपिधानार्थं लोष्टानां रक्षणाय च ।
नीव्रयोः कीलवेधैश्च दृढं तं विन्यसेत् पुनः ॥ १६ ॥

नीव्रपट्टिं चेत्यादि । विन्यस्य, तुलामूलेष्विति शेषः । नीव्रपट्टिकायोजनं द्वादशाध्याये मपञ्चितम् । पारावतं दारवीं कपोतप्रतिमाम् । किमर्थमस्य न्यास इत्यत्राह — नीव्रसन्धीत्यादि । नीव्रसन्धिः भिन्नपार्श्वात् कोणे सङ्गतयोर्द्वयोर्नीव्रयोः सन्धिः । अपिधानमाच्छादनम् । लोष्टरक्षणं च लोष्टभ्रंशपरिहाररूपम् । एवञ्च तृणाद्याच्छादने स नावश्यक इति सिध्यति । तत्रापि भूषणाय केवलं स यथोचितं योज्यो वा भवतु । कोणेषु पारावतस्य सन्धानप्रकारमाह — नीव्रयोरित्यादि । कीलवेधः कीलसन्धानम् ॥ १५,१६ ॥

अथ गृहोपरि पिधानफलकन्यासविधिमाह—

सुमुहूर्ते सुनक्षत्रे स्थपतिः पूर्ववत् सुधीः ।
पिधानं वाससा छन्नमूर्ध्वमारोप्य कीलकैः ॥ १७ ॥
निहत्य वास्या दृढतां कुर्याच्च सर्वत्र पङ्क्तिषु ।

सुमुहूर्त इत्यादि । पूर्ववत् समनन्तरोक्तेन उत्तरविन्यासविधिना तुल्यम् । पिधानं पिधानफलकम् । निहत्य सन्ताड्य । वासी तक्षणसाधनम् ॥ १७,१७½ ॥

प्रधानकवाटे अर्गलादिविन्यसनविधिमाह—

कुर्यादर्गलविन्यासं सुमुहूर्ते शुभोदये ॥ १८ ॥

ऊर्ध्वार्गलं पुत्रिकायां वामाग्रं विन्यसेद् बुधः ।
ऊर्ध्वाग्रामरमां चापि विन्यसेत् तद्बहिः पुनः ॥ १९ ॥

द्वारसूत्रादर्गलार्धमानं नीत्वा च दक्षिणे ।
विन्यसेदरमां तत्र त्वन्यस्यान्यदिशि स्मृतम् ॥ २० ॥

कुर्यादित्यादि । ऊर्ध्वार्गलं दक्षिणपुटे स्थितम् वामाग्रं वामभागाभिमुखाग्रम् । विन्यसेत्, पुत्रिकाख्यदक्षिणकवाटपुट एव । द्वारसूत्रादित्यादि । द्वारसूत्रात् द्वारमध्यसूत्रात् । अर्गलार्धमानम् अर्गलादैर्घ्यार्धायामम् । दक्षिणे दक्षिणभागे अर्थाद् द्वारमध्यसूत्रात् । नीत्वा त्यक्त्वा । तत्र दक्षिणकवाटपुटे पुत्र्याख्ये । अन्यस्य मातेति व्यपदिष्टस्य वामपुटस्य । अरमामिति द्वितीयान्तं षष्ठ्यन्ततया विपरिणमय्य अत्रापि सम्बध्यते । अन्यदिशि वामभागे । द्वारमध्यसूत्राद् वामभागे अर्गलादैर्घ्यादर्धांशत्यजनमत्रापि कर्तव्यम् । स्मृतम्, न्यसनमिति विशेष्यम् ॥ १८—२०॥

अरमा चैषा द्वारायामस्य मध्यस्थानं कवाटपुटयोर्यत्र भवति, तत्रैव निवेशनीयेत्याह—

द्वारायामस्य मध्ये तत् कुर्याच्छास्त्रविशारदः ।
दक्षिणाग्रमधःस्थं तदर्गलं मातरि स्मृतम् ॥ २१ ॥

द्वारायामेत्यादि । तत् अरमान्यसनम् । वामपुटे अर्गलस्थितिमाह— दक्षिणाग्रमित्यादि । दक्षिणाग्रं दक्षिणपुटस्थितारमाधोरन्ध्राभिमुखाग्रम् । अधःस्थं दक्षिणपुटस्थार्गलापेक्षया अधोभागे स्थितम् ॥ २१ ॥

एवं शुभे मुहूर्ते उभयोः कवाटपुटयोररमामर्गलां च तत्तत्स्थाने यथाधन्निवेश्य आयसकीलैररमयोर्दृढतामापाद्य तद्दिन एव रात्रौ यथोक्तं वास्तुबलिं च हरेदित्याह—

अरमां चापि विन्यस्य पूर्ववत् कीलवेधतः ।
दृढीकृत्य यथान्यायं रात्रौ वास्तुबलिं हरेत् ॥ २२ ॥

अरमामित्यादि । वास्तुबलिप्रकारः चतुर्थाध्याये उक्तः ॥ २२ ॥

वास्तुबलिहरणानन्तरकरणीयं गृहपरिग्रहं प्रस्तौति—

यथोक्तविधिना तत्र वास्तुकर्म समाप्य च ।
वासोभिर्बहुभिस्तत्र गेहमाच्छादयेत् पुनः ॥ २३ ॥
अथ कर्ता कर्मकारान् सम्यक् तान् पूजयेत् पुनः ।
अभ्यञ्जनादिकं दत्त्वा स्नातेभ्योऽथ यथोचितम् ॥ २४ ॥
वासांसि चानुलेपं च पुष्पाणि सुरभीणि च ।
कुण्डलादीनि सर्वाणि सर्वेभ्यश्च यथोचितम् ॥ २५ ॥
दत्त्वा चतुर्विधं चान्नं संयुक्तं षड्रसैरपि ।
दीयतां च यथाशक्ति दीयतां दक्षिणा ततः ॥ २६ ॥
एवं सन्तर्प्य तान् सर्वान् तेभ्यो गेहं प्रगृह्यताम् ।
स्थपतिः परिगृह्याथ तत्सर्वं दक्षिणादिकम् ॥ २७ ॥
कर्मकारजनैः साकं मन्त्रानेतानुदीरयेत् ॥ २७½ ॥

वर्षाम्बुपातादशनिप्रपाता-
च्चण्डाच्च वायोरपि चाग्निदाहात् ।
चोरादिकेभ्यः परचक्रघाताद्
रक्षन्त्विदं सद्म सुरासुरेभ्यः ॥ २८½ ॥

अगदा मनुजाः सधनाः सुखिनः
प्रथिता यशसा च भवन्तु चिरम् ।
विजयी निखिलां पशुसस्यवतीं
सुकृती नृपतिः पृथिवीमवतात् ॥ २९½ ॥

ब्रह्मा विष्णुः शङ्करश्चन्द्रसूर्यौ
नन्दी लक्ष्मीर्वाग्वधूः स्कन्द इन्द्रः ।

भूमिर्देवाश्चर्षयश्च प्रजानां
श्रीसौभाग्यारोग्यभोगान् कुर्वीरन् ॥ ३०½ ॥

भूयाद् ध्रुवा द्यौः पृथिवी च भूयाद्
भवन्त्विमे भूमिधरा ध्रुवाश्च ।
ध्रुवं जगद् विश्वमिदं ध्रुवं स्याद्
राजा तथा धाम च तद् ध्रुवं स्याद् ॥ ३१½ ॥

ब्रह्मैव स्थपतिः साक्षाद् यजमानः स्वयं हरिः ।
आचार्यो भगवान् रुद्रः त्रिभिर्निष्पादितं तु यत् ॥ ३२½ ॥

तद् वास्तु स्थिरमेव स्याद् दृष्टादृष्टफलप्रदम् ॥ ३३ ॥

यथोक्तेत्यादि । कुण्डलादीनीति । आदिशब्दात् पञ्चाङ्गभूषणादिष्वन्यानि कटकादीनि ग्राह्याणि । यथोचितं विद्यानुगुणं कर्मानुगुणं शीलानुगुणं च । मन्त्रानेतानिति । वर्षाम्बुपातादित्यादिश्लोकचतुष्कं मन्त्रः । रक्षन्त्विदमिति । अत्र कर्तारः वक्ष्यमाणा ब्रह्मादयः । गदो व्याधिः । दृष्टादृष्टफलप्रदमिति । दृष्टफलं शरीरसुखधनसमृद्धिसत्सन्तानादिकम् । अदृष्टफलं तैर्निष्पाद्यं सुकृतं सर्वेष्टफलसाधनभूतम् । अन्यत् सुगमम्
[ ॥ २३—३३ ॥

इति वास्तुविद्यालघुविवृतौ भवनपरिग्रहो नाम
पञ्चदशोऽध्यायः ॥

---

अथ मृल्लोष्टविधानं नाम षोडशोऽध्यायः ।

अथ गृहोपर्याच्छादनसाधनानां मृल्लोष्टानां लक्षणं, तन्निर्मितिप्रकारं, तदाच्छादनक्रमादिकं च वक्तुमध्यायान्तरमारभते । तत्र तावल्लोष्टमृदं प्रदर्शयिष्यन् तदनुपयुक्ता मृदो विवेचयति—

अथ वक्ष्यामि संक्षेपान्मृल्लोष्टानां च लक्षणम् ।
पिच्छिला पाण्डराख्या च सलोणा च विगर्हिता ॥ १ ॥

चिक्कणेत्यादि । चिक्कणा प्रकृत्यैव स्नेहगुणयुक्ता मृत् । सलोणा सक्षारा ॥ १ ॥

लोष्टनिर्माणार्हां मृदमाह —

चतुर्थी ताम्रफुल्ला तु कर्मयोग्या मृदिष्यते ।
तुषाङ्गारास्थिपाषाणकाष्ठशर्करलोष्टकैः ॥ २ ॥

वर्जिताः सूक्ष्मसिकतास्ताम्रफुल्लाभिधाश्च याः ।
ताः प्रक्षिप्यावटे मृत्स्ना जानुमात्रं जलं क्षिपेत् ॥ ३ ॥

आलोड्य पद्भिः संक्षोभ्य मर्दयेत् ताः पुनः पुनः ।
ततः क्षीरागशैरीपत्वक्क्वाथत्रिफलाम्बुभिः ॥ ४ ॥

मर्दयेन्मासमात्रं तु तत्कर्मकुशलैर्नरैः ।
लोष्टानि कल्पयेत् सम्यक् तेषां लक्षणमुच्यते ॥ ५ ॥

चतुर्थीत्यादि । कर्मयोग्या लोष्टनिर्माणोपयोगिनी । तस्याः शोधनं गुणाधानं चाह — तुषेत्यादि । अवटे अन्तर्बहिश्च इष्टकादारुफलकादिभिर्नीरन्ध्रमभितो बद्धे गर्ते । पुनः पुनरिति । यावत् ताः सुसंहता भवेयुस्तावत्पर्यन्तमित्यर्थः । ततः जलांशहानेन मृत्स्नामात्रावशेषितास्ता यदा भवेयुः, तदनन्तरम् । क्षीरागाः क्षीरिवृक्षा अश्वत्थवटादयश्चरनारः प्रसिद्धाः । तत्र वर्णप्रसादाय क्षीरिवृक्षत्वक्कषायः, विषकीटप्रवेशपरिहाराय शिरीषत्वक्कषायः, ऊष्मादिजनितदोषवारणाय त्रिफलाकषायश्च योज्यत इति मन्तव्यम् । मर्दयेदिति । अत्रायं मर्दनक्रमः — प्रथमं मृत्स्नां क्षीरिवृक्षत्वक्कषायेणावसिच्य संमर्द्य संमर्द्य मृत्स्नामात्रावशिष्टां कारयेत् । ततः शिरीषत्वक्कषायेण सिक्त्वा मर्दनेन मृत्स्नामवशोषयेत् । तदनन्तरं त्रिफलाकषायेण तां तावत्पर्यन्तं मर्दयेत्, यावता कालेन सा सुसंहता सुश्लक्ष्णा सुवर्णा च भवतीति । मासमात्रमिति । दिनत्रयेणाप्यस्या उक्तगुणाधानं कर्तुं शक्यम् । अथापि गुणातिशययोगाभिप्रायेण मासमात्रमित्युक्तम् । मासमात्रपक्षे एकैकस्य कषायस्य योजनकालः दश दिनानीत्यनुक्तमपीदम् ।

कषायपरिमाणं च प्रायः औचित्यनिबन्धनमिति नेह प्रकटितम् । मृत्स्नायां कषायगुणसङ्क्रमणं हि मर्दनविशेषसाध्यमित्यभिप्रायेणाह—तत्कर्मकुशलैरिति । तत्कर्म मृत्स्नामर्दनक्रिया । कल्पयेत् निष्पादयेत् ॥ २ – ५ ॥

अथैवमाहितगुणयोगया मृदा तत्तल्लोष्टनिर्माणप्रकारं प्रकटयिष्यन् आदौ लोष्टभेदान् परिगणयति —

नीव्रलोष्टं तूर्ध्वलोष्टं तुर्यश्रं क्रूरलोष्टकम् ।
द्व्यश्रलोष्टं कीललोष्टं कृशस्थूलाग्रलोष्टके ॥ ६ ॥
गर्तकोणं कोणलोष्टं पुटलोष्टं तथैव च ।
लोष्टान्येकादशैतेषामायामादिकमुच्यते ॥ ७ ॥

नीव्रलोष्टमित्यादि । कृशस्थूलाग्रलोष्टके इति । कृशाग्रलोष्टं स्थूलाग्रलोष्टं चेत्यर्थः । गर्तकोणं कोणे निम्नम् । लोष्टान्येकादशेति । गुरुदेवस्तु —

"द्व्यश्रं चैव द्विकोणाग्रं पार्श्वलोष्टं च वर्तुलम् ।
कोणलोष्टं च वक्रं च पद्मलोष्टं च सप्तमम् ॥"

इति लोष्टानि सप्तधा व्यभजत् ॥ ६, ७ ॥

एषु नीव्रलोष्टस्य मानमाह —

नीव्रपट्ट्यास्तु विस्तारं चतुरङ्गुलसंयुतम् ।
आयामं नीव्रलोष्टस्य कीर्तितं लोष्टवेदिभिः ॥ ८ ॥
विस्तारं द्व्यङ्गुलं कुर्याद् बहलं तारपादतः ।
तदर्धमग्रबाहल्यं सर्वेषां पर्ववाच्छिरः ॥ ९ ॥

नीव्रपट्ट्यास्त्वित्यादि । "उत्तरस्य तु विष्कम्भे" इति योऽयं नीव्रपट्टिकाया विस्तारो द्वादशाध्याये प्रदर्शितः, ततः चतुरङ्गुलमधिकं कृत्वा नीव्रलोष्टस्य दैर्घ्यं कल्पयेदित्यर्थः । तस्य विस्तारं घनं च प्रदर्शयति — विस्तारमित्यादि । तारपादतः स्वविस्तारस्य चतुर्थांशेन । इदं च मूलभागे । अग्रभागे तु तदर्धं, मूलबाहल्यादर्धं घनं भवेत् । अस्य

शिरोभागे च पट्टिकासु धारणाय पर्वाकारमुच्छूनं कञ्चिदवयवं निर्मापये-दित्याह — सर्वेषां पर्ववच्छिर इति । सर्वेषाम् अन्येषामपि लोष्टानाम् ॥ ९ ॥

अथ क्रमप्राप्तस्य ऊर्ध्वलोष्टस्य दैर्घ्यादिकमाह —

आयामं तूर्ध्वलोष्टस्य द्वादशाङ्गुलमिष्यते ।
तत्त्रिभागैकविस्तारं पञ्चयवं बहलं विदुः ॥ १० ॥

आयाममित्यादि । तत्त्रिभागैकविस्तारमिति । उक्ते आयामे त्रिधा विभक्ते एकांशेन विस्तारमस्य कल्पयेदित्यर्थः । तथाच अस्य विस्तारः चतुरङ्गुलपरिमित इत्युक्तं भवति । पञ्चयवं बहलमिति । स्फुटार्थम् । बाहल्यं चैतन्मूलाग्रयोस्तुल्यं वेदितव्यम् ॥ १० ॥

अथ पुटलोष्टस्य गर्तकोणलोष्टस्य च मानं दर्शयति —

पुटाख्यगर्तकोणानां बहलं नीव्रलोष्टवत् ।
आयामं वसुमात्रं स्याद् विस्तारमथ कथ्यते ॥ ११ ॥
युगाङ्गुलं पुटामूलं तदग्रं सार्धमात्रकम् ।
मूलं तु गर्तकोटीनां सार्धाङ्गुलमुदाहृतम् ॥ १२ ॥
चतुरङ्गुलमग्रं स्यादाकारं क्रूरलोष्टवत् ।

पुटाख्येत्यादि । नीव्रलोष्टवदिति । नीव्रलोष्टस्य बाहल्यं च

"विस्तारं ग्रङ्गुलं कुर्याद् बहलं तारपादतः ।"

इत्यधस्तादुक्तम् । ततश्चानयोर्घनं चतुर्यवमितमित्युक्तं भवति । अनयो-र्दैर्घ्यमाह — आयामं वसुमात्रमिति । 'अङ्गुलं तु भवेन्मात्रमि'त्युक्तत्वान्मात्रशब्दोऽङ्गुलपर्याय इति विज्ञायते । तथाच अनयोरायामः अष्टाङ्गुलमित इति सिध्यति । अथ पृथग् विस्तारमाह — युगाङ्गुलमित्यादि । युगाः चत्वारः । चतुरङ्गुलविस्तारश्चाय पुटलोष्टस्य मूलभाग इत्याह — पुटामूलमिति । अस्याग्रभागविस्तारस्तु — सार्धमात्रकम् ।

अध्यर्धाङ्गुलपरिमित इत्यर्थः । गर्तकोणलोष्टस्य घनमायामं च पूर्वं प्रकटितम् । इदानीं मूलाग्रभागयोः विस्तारमात्रमाह—मूलं त्वित्यादि । मूलभागविस्तारः अध्यर्धाङ्गुलमितः, अग्रभागविस्तारः चतुरङ्गुलमित इति समुदितोऽर्थः । आकारं कूरलोष्टवदिति । कूरलोष्टस्याकारमुपरि प्रदर्शयिष्यति । तत्सदृशोऽस्याप्याकारः कार्यः ॥ ११—१२½ ॥

अथ कोणलोष्टस्याप्यायामं घनं च पुटलोष्टोक्तविधया कुर्यादित्यभिप्रायेण तस्य मूलाग्रभागयोर्विस्तारमात्रमाह —

अष्टाङ्गुलं कोणमूलमग्रं सार्धाङ्गुलं विदुः ॥ १३ ॥

अष्टाङ्गुलमित्यादि । निगदव्याख्यानम् ॥ १३ ॥

अथ कूरत्र्यश्रतुर्यश्रलोष्टानामायामादिकमाह —

कूरत्र्यश्रायताश्राणामायामं वसुमात्रकम् ।
विस्तारं द्व्यङ्गुलं प्रोक्तं बहलं त्रियवं मतम् ॥ १४ ॥

कूरेत्यादि । इह आयताश्रशब्देन तुर्यश्रं विवक्षितम् । वसुमात्रकम् अष्टाङ्गुलमितम् । शेषं स्पष्टम् ॥ १४ ॥

कीललोष्टस्य कृशाग्रस्थूलाग्रलोष्टयोश्च मानमाह —

नीव्रादीनां च पञ्चानां भेदः कीलादिकं त्रयम् ।
स्वस्वतारार्धविस्तारं कीललोष्टमुदाहृतम् ॥ १५ ॥
मूलतारार्धविस्तारं कृशाग्रमिति कीर्तितम् ।
अग्रतारार्धमूलं यत् स्थूलाग्रं तदुदाहृतम् ॥ १६ ॥

नीव्रादीनामित्यादि । नीव्रं नीव्रलोष्टम् । पञ्चानामिति । नीव्रलोष्टम् ऊर्ध्वलोष्टं तुर्यश्रलोष्टं कूरलोष्टं त्र्यश्रलोष्टमिति लक्ष्यनिर्देशे यथाक्रमं पठितानि पञ्च वेदितव्यानि । कचिन्मातृकायां 'सार्धाङ्गुलं विदुः' इत्येतदनन्तरं 'नीव्रादीनामि'त्यादिकः श्लोकः पठ्यते । स तु प्रक्रमेण विरुद्धः ग्रन्थान्तरविसंवादी चेत्युपेक्षितः । कीललोष्टं हि नीव्रादीनां पञ्चानां दृढीकरणाय स्थाप्यते । अतश्च येन सहेदं योज्यते, तस्य विस्तारादर्धमानेनास्य विस्तारं कल्पयेदित्याह — स्वस्वेत्यादि । कृशाग्रलोष्टस्य च मूलविस्तारः

